ततः षट्कोणे स्वाग्रादिप्रादक्षिण्येन

श्रीं ह्रीं क्लीं ॐ गां हृदयाय नमः। हृदयशक्तिश्रीपादुकां पूजयामि नमः।

३ श्रीं गीं शिरसे स्वाहा। शिरःशक्तिश्रीपादुकां पूजयामि नमः।

३ ह्रीं गूं शिखायै वषट्। शिखाशक्तिश्रीपादुकां पूजयामि नमः।

३ क्लीं गैं कवचाय हुं। कवचशक्तिश्रीपादुकां पूजयामि नमः।

३ ग्लौं गौं नेत्रत्रयाय वौषट्। नेत्रशक्तिश्रीपादुकां पूजयामि नमः।

३ गं गः अस्त्राय फट्। अस्त्रशक्तिश्रीपादुकां पूजयामि नमः।

ततस्त्रिकोणे स्वाग्रादिप्रादक्षिण्येन

श्रीं ह्रीं क्लीं ॐ श्रीं ह्रीं क्लीं ग्लौं गं नमः।

श्रीं ह्रीं क्लीं गणपतये वर वरद नमः।

श्रीं ह्रीं क्लीं सर्वजनं मे वशमानय स्वाहा नमः।

३ ''मूलं'' नमः (बिन्दौ)

अथ-३ अस्त्राय फट् (इति आधारं प्रक्षाल्य)।

**श्रीं ह्रीं क्लीं अं अग्निमण्डलाय धर्मप्रददशकलात्मने श्रीसिद्धलक्ष्मी-सहितश्रीमहागणतपतेः विशेषार्घ्यपात्राधाराय नमः** (इति आधारं संस्थाप्य)

श्रीं ह्रीं क्लीं **अग्निदूतं वृणीमहे होतारं विश्ववेदसं। अस्य यज्ञस्य सुक्रतुम्। रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः-**

इति अग्निमण्डलं विभाव्य दश वह्निकलाः पूजयेत्। यथा-

श्रीं ह्रीं क्लीं यं धूम्रार्चिष्कलायै नमः। ३ षं सुश्रीकलायै नमः।

३ रं ऊष्माकलायै नमः। ३ सं सुरूपाकलायै नमः।

३ लं ज्वलिनीकलायै नमः। ३ हं कपिलाकलायै नमः।

३ वं ज्वालिनीकलायै नमः। ३ ळं हव्यवाहिनीकलायै नमः।

३ शं विस्फुलिङ्गिनीकालयै नमः। ३ क्षं कव्यवाहिनीकलायै नमः।

ततः– श्रीं ह्रीं क्लीं अस्त्राय फट् (इति मन्त्रेण विशेषार्घ्यपात्रं प्रक्षाल्य)

श्रीं ह्रीं क्लीं **उं सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने श्रीसिद्धलक्ष्मी–सहितश्रीमहागणपतेः विशेषार्घ्यपात्राय नमः** (इति आधारोपरि संस्थाप्य)।

श्रीं ह्रीं क्लीं ऐं श्रीमहालक्ष्मीश्वरि परमस्वामिनि ऊर्ध्वशून्यप्रवाहिनि सोमसूर्याग्निभक्षिणि परमाकाशभासुरे आगच्छागच्छ विश विश पात्रं प्रतिगृह्ण प्रतिगृह्ण हुं फट् स्वाहा, (इति पुष्पाञ्जलिं विकीर्य)।।

श्रीं ह्रीं क्लीं **आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च।**
**हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवनानि पश्यन्।।**

३ **हां हीं हूं हैं हौं हः हमलवरयूं सूर्यमण्डलाय नमः।**

(इति सूर्यमण्डलं विभाव्य द्वादश सूर्यकलाः पूजयेत्)। यथा–

| | |
|---|---|
| श्रींह्रींक्लीं कं भं तपिनी कलायै नमः। | ३ छं दं सुषुम्नाकलायै नमः। |
| ३ खं बं तापिनीकलायै नमः। | ३ जं थं भोगदाकलायै नमः। |
| ३ गं फं धूम्राकलायै नमः। | ३ झं तं विश्वाकलायै नमः। |
| ३ घं पं मरीचिकलायै नमः। | ३ ञं णं बोधिनीकलायै नमः। |
| ३ ङं नं ज्वालिनीकलायै नमः। | ३ टं ढं धारिणीकलायै नमः। |
| ३ चं धं रुचिकलायै नमः। | ३ ठं डं क्षमाकलायै नमः। |

**श्रीं ह्रीं क्लीं मं सोममण्डलाय कामप्रदषोडशकलात्मने श्रीसिद्धलक्ष्मी–सहितश्रीमहागणतेः विशेषार्घ्यामृताय नमः–**

इति अकारादि क्षकारान्तं क्षकाराद्यकारान्तं मातृकया अर्पितेन अमृतेन आपूर्य अष्टगन्धलोलितं पुष्पं निधाय नागरखण्डं निक्षिप्य।

श्रीं ह्रीं क्लीं **आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम्।**
**भवावाजस्य सङ्गथे।।**

**सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः–**

इति सोममण्डलं विभाव्य षोडश सोमकलाः पूजयेत्। यथा–

श्रींह्रींक्लींअं अमृताकलायै नमः।
३ आं मानदाकलायै नमः।
३ इं पूषाकलायै नमः।
३ ईं तुष्टिकलायै नमः।
३ उं पुष्टिकलायै नमः।
३ ऊं रतिकलायै नमः।
३ ऋं धृतिकलायै नमः।
३ ॠं शशिनीकलायै नमः।
३ लृं चन्द्रिकाकलायै नमः।
३ ॡं कान्तिकलायै नमः।
३ एं ज्योत्स्नाकलायै नमः।
३ ऐं श्रीकलायै नमः।
३ ओं प्रीतिकलायै नमः।
३ औं अङ्गदाकलायै नमः।
३ अं पूर्णाकलायै नमः।
३ अः पूर्णामृताकलायै नमः।

ततः, श्रीं ह्रीं क्लीं ॐ जुं सः स्वाहा। (इति अष्टवारमभिमन्त्र्य)।

तत्रार्घ्यामृते स्वाग्राद्यप्रादक्षिण्येन अकथादिषोडशवर्णात्मकरेखात्रयं त्रिकोणं विलिख्य, तदन्तः स्वाग्रादि कोणेषु अप्रादक्षिण्येन हळक्षान् बहिः-प्रादक्षिण्येन महागणपतिमूलखण्डत्रयं बिन्दौ सबिन्दुतुरीयस्वरम्, तद्वामदक्षयोः क्रमेण हंसः इति विलिख्य-

श्रीं ह्रीं क्लीं हंसः नमः (इति आराध्य) त्रिकोणस्य परितः वृत्तं तद्बहिश्च षट्कोणं निर्माय स्वाग्रकोणादि प्रादक्षिण्येन षडङ्गमन्त्रैः षट्कोणमभ्यर्च्य।

श्रीं ह्रीं क्लीं "मूलं" तां चिन्मयीम् आनन्दलक्षणां अमृतकलश-पिशितहस्तद्वयां प्रसन्नां देवीं पूजयामि नमः स्वाहा (इति सुधादेवीं समभ्यर्च्य) तदर्घ्यात् किञ्चित् पात्रान्तरेण-

श्रीं ह्रीं क्लीं वषट्। इति उद्धृत्य

३ स्वाहा। इति तत्रैव निक्षिप्य

३ हुं। इति अवगुण्ठ्य

३ वौषट्। इति धेनुमुद्रया अमृतीकृत्य

३ फट्। इति संरक्ष्य

३ नमः। इति पुष्पं दत्वा

३ मूलेन गालिन्या निरीक्ष्य

३ ऐं इतिं योनिमुद्रया नत्वा

श्रीं ह्रीं क्लीं ''मूलेन'' सप्तवारमभिमन्त्र्य सुधादेवीं षोडशोपचारैः सम्पूज्य। तद्बिन्दुभिः सपर्यासाधनानि प्रोक्ष्य। सर्वं महागणपतिमयं विभावयेत्।

ततः विशेषार्घ्यपात्रं करेण संस्पृश्य वक्ष्यमाणगणपतिगायत्र्या ऋचा चाभिमन्त्रयेत्-

**ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्।।**
**गणानां त्वा गणपतिं हवामहे कविं कवीनामुपश्रवस्तमम्।**
**ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्।।**
(श्रीक्रमोक्तचतुर्नवतिमन्त्राद्यभिमन्त्रणमत्र नास्ति)।

विशेषार्घ्यपात्रस्याधः त्रिकोण-वृत्त-चतुरस्रात्मकं मण्डलद्वयं विलिख्य, प्रथममण्डले-

**श्रीं ह्रीं क्लीं हंसः शिवः सोहं सोहं हंसश्शिवः, हंसश्शिवस्सोहं हंसः नमः।** इत्यभ्यर्च्य, गुरुपात्रं निधाय। द्वितीयमण्डले-

**श्रीं ह्रीं क्लीं हंस नमः।** इत्यभ्यर्च्य आत्मपात्रं निधाय। ततः विशेषार्घ्यामृतात् किञ्चित् गुरुपात्रे उद्धृत्य गुरुत्रयं यजेत्। पुनः आत्मपात्रे तं विशेषार्घ्यामृतमुद्धृत्य, मूलाधारे बालाग्रमात्रं अनादिवासनारूपेन्धनप्रज्वलितं कुण्डलिन्यधिष्ठितचिदग्निमण्डलं ध्यात्वा,

**श्रीं ह्रीं क्लीं कुण्डलिन्यधिष्ठितचिदग्निमण्डलाय नमः।** इति मनसा सम्पूज्य,

श्रीं ह्रीं क्लीं (मूलं) पुण्यं जुहोमि स्वाहा।

३ (मूलं) पापं जुहोमि स्वाहा। ३ (मूलं) विकल्पं जुहोमि स्वाहा
३ (मूलं) कृत्यं जुहोमि स्वाहा ३ (मूलं) धर्मं जुहोमि स्वाहा
३ (मूलं) अकृत्यं जुहोमि स्वाहा ३ (मूलं) अधर्मं जुहोमि स्वाहा
३ (मूलं) सङ्कल्पं जुहोमि स्वाहा ३ (मूलं) अधर्मं जुहोमि वौषट्

श्रीं ह्लीं क्लीं इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्त्य-वस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा-इति पूर्णाहुतिं विभाव्य-

श्रीं ह्लीं क्लीं **आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि। योऽहमस्मि ब्रह्माहमस्मि। अहमस्मि ब्रह्माहमस्मि। अहमेवाहं मां जुहोमि स्वाहा-**

(इति आत्मनः कुण्डलिनीरूपे चिदग्नौ होमबुद्ध्या जुहुयात्)

विशेषार्घ्यपात्रात् किञ्चित् क्षीरं कारणकलशे निक्षिपेत्।

## पीठे प्राणप्रतिष्ठा

पुरतो रक्तचन्दनादिभिः निर्मिते पीठे कलधौतादिविरचितां महा-गणपतिप्रतिमां वा ध्यानोक्तरूपां चतुरस्राष्टदलषडरत्रिकोणात्मकं सिन्दूरादिना लिखितं लेखितं वा यन्त्रं धातुमयं वा निवेश्य-

श्रीगणेशयन्त्रस्य प्राणाः इह प्राणाः, श्रीगणेशयन्त्रस्य जीव इह स्थितः, श्रीगणेशयन्त्रस्य सर्वेन्द्रियाणि श्रीगणेशयन्त्रस्य वाङ्मनःप्राणाः इह आयान्तु स्वाहा। (इति मन्त्रेण प्राणप्रतिष्ठां विदध्यात्)।

(प्राणप्रतिष्ठितमूर्तौ यन्त्रे वा नावश्यकी प्रतिष्ठा)।

## पीठशक्तिपूजा

यन्त्रस्य त्रिकोणे स्वाग्रादि प्रादक्षिण्येन परितो मध्ये च क्रमेण-

श्रीं ह्लीं क्लीं तीव्रायै नमः। श्रीं ह्लीं क्लीं उग्रायै नमः।

३ ज्वालिन्यै नमः। ३ तेजोवत्यै नमः।

३ नन्दायै नमः। ३ सत्यायै नमः।

३ भोगदायै नमः। ३ विघ्ननाशिन्यैनमः।

३ कामरूपिण्यै नमः। ३ सर्वशक्तिकमलासनायै नमः।

(इति नवगणेशशक्तीरभ्यर्च्य)

## धर्माद्यष्टकपूजा

तत्रैव आग्नेयादिविदिक्षु प्रागादिदिक्षु च क्रमेण

श्रीं ह्रीं क्लीं ऋं धर्माय नमः। श्रीं ह्रीं क्लीं ॠं अधर्माय नमः।

| | | | |
|---|---|---|---|
| ३ | ॠं ज्ञानाय नमः। | ३ | ॠं अज्ञानाय नमः। |
| ३ | ऌं वैराग्याय नमः। | ३ | ऌं अवैराग्याय नमः। |
| ३ | ॡं ऐश्वर्याय नमः। | ३ | ॡं अनैश्वर्याय नमः। |

(इति-अर्चयेत्)

## अन्तर्याग:

द्वादशान्ते सहस्रदलकमलकर्णिकामध्ये निविष्टगुरुचरणयुगलविगलदमृतरसविसरपरिपुताखिलाङ्गो हृदयकमलमध्ये ज्वलन्तमुद्यदरुणकोटिपाटलमशेषदोषनिश्शेषभूतमनेकपाननं पुर्यष्टकाकारं साङ्गं सावरणं भक्तानुग्रहार्थं तेजोरूपेण परिणतं प्रापय्य ब्रह्मरन्ध्रं बहन्नासापुटेन निर्गमय्य त्रिखण्डामुद्रामण्डितशिखण्डे कुसुमाञ्जलौ हस्ते समानीय-

ऐक्षवे जलधौ द्वीपे नवरत्नमये शुभे।
तत्तरङ्गोल्लसत्तोयै धौते शीततलेऽमले।। १।।
तत्तोयकर्णसंपृक्त-गन्धवाहनिषेविते ।
कल्पपादपसंशोभिभूभागसमलङ्कृते ।। २।।
नानाकुसुमसङ्कीर्णे नानापक्षिविराजिते।
अनेकफलसङ्कीर्णे भाविते वाप्सरोगणैः।। ३।।
उद्यद्बालातपोद्द्योतिचन्द्रज्योत्स्नासमाकुले।
विलसत्पद्मरागौघ-कुट्टिमारुणभूतले ।। ४।।
कल्पपादपपुष्पस्थ-षट्पदस्वनमञ्जुले।
पारिजातं कल्पतरुं तस्य मध्ये विचिन्तयेत्।। ५।।
युगपद् ऋतुषट्केन सेवितं पुष्पशोभितम्।
नवरत्नमयं तस्याऽधस्तात् सिंहासनं स्मरेत्।। ६।।
तन्मध्ये लिपिपद्मं च षडस्त्रं तस्य मध्यतः।
कर्णिकायां त्रिकोणं च तत्संस्थं च महागणम्।। ७।।

नानारत्नविभूषाढ्यमेकदन्तं गजाननम्।
बीजापूरगदाचापशूलचक्राम्बुजान्यपि ॥ ८॥
पाशोत्पले च व्रीह्यग्रं स्वदन्तं रत्नपात्रकम्।
धारयन्तं दशभुजैः भक्ताभीष्टप्रदायकम्॥ ९॥
सर्वाङ्गभूषोज्वलया पद्मसंशोभिहस्तया।
आश्लिष्टवामपार्श्वश्च देव्या वल्लभया सदा॥ १०॥
विघ्नेशं विघ्नहर्तारं फुल्लपद्माभविग्रहम्।
पुष्करोद्धृतरत्नौघमयकुम्भमुखस्नुतात् ॥ ११॥
मणिमुक्ताप्रवालादीन् वर्षन्तं धारया मुहुः।
सर्वतः साधकस्याग्रे स्वदानजललोलुपान्॥ १२॥
षट्पदालीं कर्णतालैः वारयन्तं मुहुर्मुहुः।
अमरासुरसंसेव्यं सद्रत्नमुकुटोज्ज्वलम् ॥ १३॥
ऊरूदरं गजमुखं नानाभरणभूषितम्।
इति ध्यात्वा गणपतिं यजेत् सर्वोपचारकैः॥ १४॥
बीजापूरगदेक्षुकार्मुकरुजा चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः।
ध्येयो वल्लभया सपद्मकरया श्लिष्टोज्ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः॥१५॥

इति ध्यात्वा

## आवाहनम्

गणानान्त्वेति मन्त्रेण मूलमन्त्रेण च अस्मिन् यन्त्रे (बिम्बे वा) श्रीसिद्ध-लक्ष्मीसहितश्रीमहागणपतिं साङ्गं सपरिवारं सावरणम् आवाहयामि नमः।

श्रीं ह्रीं क्लीं (मूलं) आवाहितो भव। ३ (मूलं) सम्मुखो भव।
३ (मूलं) संस्थापितो भव। ३ (मूलं) अवगुण्ठितो भव।
३ (मूलं) सन्निधापितो भव। ३ (मूलं) सुप्रसन्नो भव।
३ (मूलं) सन्निरुद्धो भव। ३ (मूलं) वरदो भव।

स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम् ।
तावत्त्वं प्रीतिभावेन यन्त्रेऽस्मिन् (बिम्बेऽस्मिन्) सन्निधिं कुरु ।।

इति मन्त्रैरावाहनादि षण्मुद्राः प्रदर्श्य, वन्दनधेनुयोनिमुद्राश्च प्रदर्शयेत्।

अथ हृदयादि षडङ्गमुद्राश्च प्रदर्शयेत्। महागणपतिप्रियदन्तपाशादि सप्तमुद्राः प्रदर्शयेत्।

## षोडशोपचारपूजा

(श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिदेवतायाः षोडशोपचारानाचरेत्)।

श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये पाद्यं कल्पयामि नमः।।१।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये अर्घ्यं कल्पयामि नमः।।२।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये आचमनीयं कल्पयामि नमः।।३।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये स्नानं[1] कल्पयामि नमः।।४।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये वस्त्रोत्तरीयं कल्पयामि नमः।।५।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये भूषणं कल्पयामि नमः।।६।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये गन्धं कल्पयामि नमः।।७।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये पुष्पं कल्पयामि नमः।।८।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये धूपं कल्पयामि नमः।।९।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये दीपं कल्पयामि नमः।।१०।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये नैवेद्यं कल्पयामि नमः।।११।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये ताम्बूलं कल्पयामि नमः।।१२।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये नीराजनं कल्पयामि नमः।।१३।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये पुष्पाञ्जलिं कल्पयामि नमः।।१४।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये प्रदक्षिणां कल्पयामि नमः।।१५।।
३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये नमस्कारान् कल्पयामि नमः।।१६।।

श्रीं ह्रीं क्लीं दन्त–पाश–अङ्कुश–विघ्न–परशु–लड्डूक–बीजापूराह्वयाः सप्तमुद्राः गणेशस्य प्रियाः मताः। इति सप्तमुद्राः प्रदर्शयेत्।

---

1. स्नानसमये दुग्ध–पञ्चामृत–मधु–फलरसादिना अभिषिञ्चेत्, पुरुष–सूक्तगणपत्युपनिषद्गणपतिगायत्र्यादि–वेदमन्त्रान् उच्चरेत्।

## चतुरायतनपूजा

विष्णुशिवसूर्यदेव्याह्वयाः चतुरायतनदेवताः।
आग्नेय–ईशान–नैर्ऋत–वायव्येषु तत्तन्मूलमन्त्रेण यजेत्।

## श्रीमहागणपतितर्पणम्

(ततो मूलान्ते, श्रीमहागणपतिश्रीपादुकां पूजयामि, इति देवं दशवारं पूजयेत्)
श्रीं ह्रीं क्लीं 'मूलं' श्रीसिद्धलक्ष्मीसहितमहागणपतिश्रीपादुकां पूजयामि नमः
(इति दशवारं सन्तर्पयेत्)

## षडङ्गपूजा

ततो देवस्याङ्गे अग्नीशासुरवायुकोणेषु मौलौ दिक्षु च–

| | |
|---|---|
| श्रीं ह्रीं क्लीं ॐ गां हृदयाय नमः। | हृदयशक्तिश्रीपादुकां पूजयामि नमः। |
| ३ श्रीं गीं शिरसे स्वाहा। | शिरः शक्तिश्रीपादुकां पूजयामि नमः। |
| ३ ह्रीं गूं शिखायै स्वाहा। | शिखाशक्तिश्रीपादुकां पूजयामि नमः। |
| ३ क्लीं गैं कवचाय हुं। | कवचशक्तिश्रीपादुकां पूजयामि नमः। |
| ३ ग्लौं गौं नेत्रत्रयाय वौषट्। | नेत्रशक्तिश्रीपादुकां पूजयामि नमः। |
| ३ गं गः अस्त्राय फट्। | अस्त्रशक्तिश्रीपादुकां पूजयामि नमः। |

## गुरुमण्डलार्चनम्

देवस्य पश्चात् प्रागपवर्गरेखात्रये दक्षिणसंस्था गुर्वौघत्रयं यजेत्। यथा–

दिव्यौघः

श्रीं ह्रीं क्लीं विनायकसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ कवीश्वरसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ विरूपाक्षसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ विश्वसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ ब्रह्मण्यसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ निधीशसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

सिद्धौघः

श्रीं ह्रीं क्लीं गजाधिराजसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ वरप्रदसिद्धाचार्यश्रीपादुकां पूजयामि नमः ।

मानवौघः

३ विजयसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ दुर्जयसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ जयसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ दुःखारिसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ सुखावहसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ परमात्मसिद्धाचार्यश्रीपादुकां पूजयामि नमः

३ सर्वभूतात्मसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ महानन्दसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ फालचन्द्रसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ सद्योजातसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ बुद्धसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

३ शूरसिद्धाचार्यश्रीपादुकां पूजयामि नमः।

ततः परमेष्ठिगुरुमन्त्रेण परमेष्ठिगुरुं, परमगुरुमन्त्रेण परमगुरुं, स्वगुरु-मन्त्रेण स्वगुरुं च यजेत्।

## आवरणार्चनम्

**त्रिकोणबाह्ये पूर्वादिचतुर्दिक्षु समर्चयेत्।**
**अग्रस्थबिल्ववृक्षाधः श्रियं श्रीपतिमर्चयेत्।।**
**पद्मायुधधरा पद्मा शङ्खचक्रधरो हरिः।**
**दक्षिणे वटवृक्षाधः गौरीं गौरीपतिं यजेत्।।**
**पाशाङ्कुशधरा गौरी टङ्कशूलधरो हरः।**
**पश्चिमे पिप्पलस्याधो रतिं रतिपतिं यजेत्।।**

रतिरुत्पलहस्ताढ्या कोदण्डास्त्रधरः स्मरः।
सौम्ये प्रियङ्गुवृक्षाधः महापोत्रिणमर्चयेत्।।
शूकव्रीह्यग्रहस्ताभूर्गदाचक्रधरः पतिः।
षट्कोणेषु च सम्पूज्याः आमोदाद्याः प्रियान्विताः।।
आमोदं सिद्धिसहितमग्रकोणे प्रपूजयेत्।
समृद्ध्या युक्तमभ्यर्च्य प्रमोदं वह्निकोणके।।
सुमुखं कान्तिसंयुक्तमीशकोणे समर्चयेत्।
दुर्मुखं मदनावत्या यजेद्वरुणकोणके ।।
विघ्नं मदद्रवायुक्तं कोणे नैशाचरे यजेत्।
वायव्ये विघ्नकर्तारं द्राविण्या सह संयजेत्।।
पाशाङ्कुशाभयाऽभीष्टधारिणोऽरुणविग्रहाः।
गण्डभित्तिगलद्दानपूरधौतमुखाम्बुजाः ।।
विघ्नस्तत्प्रमदास्सर्वाः मदाघूर्णितलोचनाः।
एकहस्तधृताम्भोजाः इतरालिङ्गितप्रियाः।।
षट्कोणपार्श्वयोः पूज्यौ शङ्खपद्मनिधी क्रमात्।
निजप्रियाभ्यां सहितौ सर्वाभरणभूषितौ ।।
केशरेष्वङ्गपूजा स्यात् ब्राह्म्याद्याः पत्रमध्यगाः।
बहिर्लोकेश्वराः पूज्याः वज्रादीनि यथाक्रमम्।।

## प्रथमावरणम्

त्र्यस्रषडस्रयोरन्तराले प्रागादिदिक्षु क्रमेण

श्रीं ह्रीं क्लीं श्री–श्रीपतिश्रीपादुकां पूजयामि नमः।
३ गिरिजा–गिरिजापतिश्रीपादुकां पूजयामि नमः।
३ रति–रतिपतिश्रीपादुकां पूजयामि नमः।
३ मही–महीपतिश्रीपादुकां पूजयामि नमः।

एताः प्रथमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाःसन्तु नमः। (इति पुष्पं दत्वा)।

मूलेन देवं त्रिः सन्तर्प्य, (पञ्चोपचारं कृत्वा)।

श्रीं ह्रीं क्लीं **अभीष्टसिद्धिं मे देहि शरणागतवत्सल।**
**भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्।**

(इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)

अनेन प्रथमावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम्।

(इति योनिमुद्रया प्रणमेत्)

## द्वितीयावरणम्

(षडस्रे देवाग्रकोणमारभ्य प्रादक्षिण्येन तद्दक्षवामपार्श्वयोश्च क्रमेण यजेत्)

श्रीं ह्रीं क्लीं ऋद्ध्यामोदश्रीपादुकां पूजयामि नमः।

३ समृद्धिप्रमोदश्रीपादुकां पूजयामि नमः।

३ कान्तिसुमुखश्रीपादुकां पूजयामि नमः।

३ मदनावतीदुर्मुखश्रीपादुकां पूजयामि नमः।

३ मदद्रवाऽविघ्नश्रीपादुकां पूजयामि नमः।

३ द्राविणीविघ्नकर्तृश्रीपादुकां पूजयामि नमः।

३ वसुधाराशङ्खनिधिश्रीपादुकां पूजयामि नमः।

३ वसुमतीपद्मनिधिश्रीपादुकां पूजयामि नमः।

एताः द्वितीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः। इति पुष्पं दत्वा।

मूलेन देवं त्रिःसन्तर्प्य, पञ्चोपचारं कृत्वा।

श्रीं ह्रीं क्लीं **अभीष्टसिद्धिं मे देहि शरणागतवत्सल।**
**भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्।।**

(इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)

अनेन द्वितीयवरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम्।

(इति योनिमुद्रया प्रणमेत्)

## तृतीयावरणम्

षडस्रसन्धिषट्के प्राग्वत् षडङ्गदेवताऽर्चनम्।

श्रीं ह्रीं क्लीं ॐ गां हृदयशक्तिश्रीपादुकां पूजयामि नमः।
३ श्रीं गीं शिरःशक्तिश्रीपादुकां पूजयामि नमः।
३ ह्रीं गूं शिखाशक्तिश्रीपादुकां पूजयामि नमः।
३ क्लीं गैं कवचशक्तिश्रीपादुकां पूजयामि नमः।
३ ग्लौं गौं नेत्रशक्तिश्रीपादुकां पूजयामि नमः।
३ गं गः अस्त्रशक्तिश्रीपादुकां पूजयामि नमः।

एताः तृतीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः। इति पुष्पं दत्वा।

मूलेन देवं त्रिः सन्तर्प्य। पञ्चोपचारं कृत्वा।

श्रीं ह्रीं क्लीं **अभीष्टसिद्धिं मे देहि शरणागतवत्सल।**
**भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम्।।**

इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य-

अनेन तृतीयावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम्।

(इति योनिमुद्रया प्रणमेत्)

## तुरीयावरणम्

अष्टदले पश्चिमादि दिक्षु वायव्यादि विदिक्षु च प्रादक्षिण्यक्रमेण-

श्रीं ह्रीं क्लीं आं ब्राह्मीश्रीपादुकां पूजयामि नमः।
३ ईं माहेश्वरीश्रीपादुकां पूजयामि नमः।
३ ऊं कौमारीश्रीपादुकां पूजयामि नमः।
३ ऋं वैष्णवीश्रीपादुकां पूजयामि नमः।
३ लॄं वाराहीश्रीपादुकां पूजयामि नमः।
३ ऐं माहेन्द्रीश्रीपादुकां पूजयामि नमः।
३ औं चामुण्डाश्रीपादुकां पूजयामि नमः।
३ अः महालक्ष्मीश्रीपादुकां पूजयामि नमः।

एताः तुरीयावरणदेवता साङ्गा सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः। इति पुष्पं दत्वा।

मूलेन देवं त्रिः सन्तर्प्य, पञ्चोपचारं कृत्वा।

श्रीं ह्रीं क्लीं **अभीष्टसिद्धिं मे देहि शरणागतवत्सल।**
**भक्त्या समर्पये तुभ्यं तुरीयावरणार्चनम्।।**

इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य-

अनेन तुरीयावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम्।

(इति योनिमुद्रया प्रणमेत्)

## पञ्चमावरणम्

अथ चतुरस्रस्य रेखायां प्रागाद्यासु अष्टसु दिक्षु क्रमेण-

श्रीं ह्रीं क्लीं लां इन्द्राय वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय सपरिवाराय नमः, इन्द्रश्रीपादुकां पूजयामि नमः।

३ रां अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय सपरिवाराय नमः, अग्निश्रीपादुकां पूजयामि नमः।

३ टां यमाय दण्डहस्ताय प्रेताधिपतये महिषवाहनाय सपरिवाराय नमः, यमश्रीपादुकां पूजयामि नमः।

३ क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय सपरिवाराय नमः, निर्ऋतिश्रीपादुकां पूजयामि नमः।

३ वां वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय सपरिवाराय नमः, वरुणश्रीपादुकां पूजयामि नमः।

३ यां वायवे ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय सपरिवाराय नमः, वायुश्रीपादुकां पूजयामि नमः।

३ सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय सपरिबाराय नमः, सोमश्रीपादुकां पूजयामि नमः।

३ हां ईशानाय त्रिशूलहस्ताय विद्याऽधिपतये वृषभवाहनाय सपरिवाराय नमः, ईशानश्रीपादुकां पूजयामि नमः।

एताः पञ्चमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिता सन्तुष्टाः सन्तु नमः। इति पुष्पं दत्वा।

मूलेन देवं त्रिःसन्तर्प्य। पञ्चोपचारं कृत्वा।

श्रीं ह्रीं क्लीं **अभीष्टसिद्धिं मे देहि शरणागतवत्सल।**
**भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम्।।**

(इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)

अनेन पञ्चमावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम्।

(इति योनिमुद्रया प्रणमेत्)

पुनः मूलेन दशवारं सन्तर्पयेत्

श्रीं ह्रीं क्लीं 'मूलं' श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिश्रीपादुकां पूजयामि नमः। इति दशवारं सन्तर्पयेत्।

## षोडशनामार्चनम्

| | |
|---|---|
| श्रीं ह्रीं क्लीं सुमुखाय नमः। | ३ धूमकेतवे नमः। |
| ३ एकदन्ताय नमः। | ३ गणाध्यक्षाय नमः। |
| ३ कपिलाय नमः। | ३ फालचन्द्राय नमः। |
| ३ गजकर्णकाय नमः। | ३ गजाननाय नमः। |
| ३ लम्बोदराय नमः। | ३ वक्रतुण्डाय नमः। |
| ३ विकटाय नमः। | ३ शूर्पकर्णाय नमः। |
| ३ विघ्नराजाय नमः। | ३ हेरम्बाय नमः। |
| ३ गणाधिपाय नमः। | ३ स्कन्दपूर्वजाय नमः। |

पुनः पूर्वोक्तषोडशभिरुपचारैः पूजयेत्।

श्रीं ह्रीं क्लीं श्रीमहागणपतये नमः नानाविधपरिमलपत्रपुष्पदूर्वादीनि समर्पयामि। अथ यथावकाशं सहस्रनामादिना-अर्चनं कुर्यात्।

### धूपः

श्रीं ह्रीं क्लीं **धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः। देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्॥अह्रुतमसि**

**हविर्धानं दृ॑ंहस्व माह्वार्मातेयज्ञपतिर्ह्वार्षीत्। मित्रस्य त्वा चक्षुषा प्रेक्षे माभेर्मा संविक्था मा त्वा हि॑ंसिषम्।**

३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये नमः धूपमाघ्रापयामि।

धूपानन्तरम् आचमनीयं समर्पयामि।

## दीपः

श्रीं ह्रीं क्लीं **उद्दीप्यस्व जातवेदोपघ्नन्निर्ऋतिं मम।**
**पशू॑ंश्च मह्यमावह जीवनं च दिशो दिश।**
**मा नो हि॑ंसीर्जातवेदो गामश्वं पुरुषं जगत्।**
**अबिभ्रदग्न आगहि श्रिया मा परिपातय।।**

३ श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये नमः, दीपं दर्शयामि।

दीपानन्तरम् आचमनीयं समर्पयामि।

ततः-दन्त-पाश-अङ्कुश-विघ्न-परशु-लड्डुक- बीजापूराख्याः सप्तमुद्राः प्रदर्शयेत्।

## नैवेद्यम्

श्रीदेवाग्रे, चतुरस्रमण्डलं, सामान्यार्घ्योदकेन विधाय, तत्र आधारोपरि स्थापितं सौवर्ण-रौप्य-कांस्यादि-स्थाली-चषकभरितं भक्ष्य-भोज्य-चोष्यलेह्यपेयात्मकं रसवद्व्यञ्जनमञ्जुलं प्राज्यकपिलाज्यं दधिदुग्धमधु, यथा-सम्भवं वा नैवेद्यं निधाय मूलेन निरीक्ष्य-

श्रीं ह्रीं क्लीं ऐं हः- इति अस्त्रेण प्रोक्ष्य-

३ ॐ जुं सः वौषट्-इति सप्तवारमभिमन्त्रितजलेन प्रोक्ष्य-

३ चक्रमुद्रां प्रदर्श्य-

३ यं-इति वायुबीजेनाधोमुखवामकरेण सप्तवारं जपन् तद्गतदोषान् संशोष्य-

३ रं- इति वह्निबीजेन अधोमुखदक्षकरेण सन्दह्य-

३ वं-इति धेनुमुद्रया अमृतीकृत्य-

३ मूलेन विशेषार्घ्यबिन्दुभिः प्रोक्ष्य-

मूलेन सप्तवारमभिमन्त्र्य-

**ॐ क्लीं कामदुघे अमोघे वरदे विच्चे स्फुर स्फुर श्रीं परश्रीं,**

इति कामधेनुविद्यया धेनुमुद्रयाऽमृतीकृत्य,

देवस्य पाद्यम् अर्घ्यं आचमनीयं च दत्वा-

''मूलेन'' देवं त्रिः सन्तर्प्य-

पात्रान्तरे विशेषार्घ्यं किञ्चित् गृहीत्वा वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृशन्-

३ 'मूलं' साङ्गाय सपरिवाराय सशक्तये श्रीसिद्धलक्ष्मीसहित-
श्रीमहागणपतये नैवेद्यं कल्पयामि नमः-

इति नैवेद्यपरिसरे संस्थाप्य। कृताञ्जलिः

३ **हेमपात्रगतं दिव्यं परमान्नं संसुस्कृतम्।**
**पञ्चधा षड्रसोपेतं गृहाण परमेश्वर।।**
**शर्करापायसापूपघृतव्यञ्जनसंयुतम् ।**
**विचित्ररुचिनैवेद्यं हृद्यमावेदयाम्यहम्।।** इति निवेद्य

ॐ भूर्भुवस्वः+परिषिञ्चामि। अमृतोपस्तरणमसि- इति देवतायै आपोशनं दत्वा-वामकरेण ग्रासमुद्रां प्रदर्श्य, दक्षकरेण प्राणादिपञ्चमुद्राप्रदर्शनपूर्वकं पञ्चप्राणाहुतीः कल्पयेत्। यथा-

श्रीं ह्रीं क्लीं प्राणाय स्वाहा।          श्रीं ह्रीं क्लीं उदानाय स्वाहा।

३ अपानाय स्वाहा।          ३ समानाय स्वाहा।

३ व्यानाय स्वाहा।          ३ ब्रह्मणे स्वाहा।

श्रीं ह्रीं क्लीं ॐ गं आत्मतत्त्वव्यापकः श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिस्तृप्यतु।

३ ॐ गं विद्यातत्त्वव्यापकः श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिस्तृप्यतु।

३ ॐ गं शिवतत्त्वव्यापकः श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिस्तृप्यतु।

३ ॐ गं सर्वतत्त्वव्यापकः श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिस्तृप्यतु।

(इति किञ्चित्किञ्चित् सामान्यार्घ्योदकं दद्यात्)।

श्रीं ह्रीं क्लीं चित्पात्रे सद्धविस्सौख्यं विविधानेकभक्षणम्।
निवेदयामि ते देव सानुगस्त्वं जुषाण तत्।।

श्रीं ह्रीं क्लीं मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः।
मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः। मधुद्यौरस्तुः न पिता।
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः।

(इति पुष्पाञ्जलिं विन्यस्य नैवेद्यजातं तादात्म्येन समर्पयेत्)

श्रीं ह्रीं क्लीं नमस्ते देवदेवेश सर्वतृप्तिकरं परम्।
अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम्।।
अमृतानन्दसम्पूर्णं गृहाण जलमुत्तमम्।।

३ श्रीसिद्धलक्ष्मीसहित- श्रीमहागणपतये अमृतपानीयं समर्पयामि।

(देवं भुक्तवन्तं सुतृप्तं ध्यात्वा)

ॐ अमृतापिधानमसि। इत्युत्तरापोशनं दत्वा-

श्रीं ह्रीं क्लीं हस्तप्रक्षालनं, गण्डूषं, पादप्रक्षालनम्, आचमनीयं कल्पयामि नमः।

(ताम्रबलिपात्रे निवेदन-सामग्रीः किञ्चित्किञ्चिदादाय निवेदनपात्राणि निर्गमय्य तत्स्थलं अस्त्रेण शोधयेत्)

## ताम्बूलम्

श्रीं ह्रीं क्लीं वनस्पतिदैवत्याय ताम्बूलाय नमः। इति सामान्यार्घ्योदकेन प्रोक्ष्य-

श्रीं ह्रीं क्लीं तमालदलकर्पूरपूगभागसमन्वितम्।
एलापत्रसुसंयुक्तं ताम्बूलं प्रतिगृह्यताम्।।

३ श्रीसिद्धलक्ष्मीसहित-श्रीमहागणपतये ताम्बूलं कल्पयामि नमः।

## कुलदीपः

३ 'मूलं' - अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम्।
त्रिधा दीपं परिभ्राम्य कुलदीपं निवेदये।।

## कर्पूरनीराजनम्

श्रीं ह्रीं क्लीं सोमो वा एतस्य राज्यमादत्ते। यो राजा साम्राज्यो वा सोमेन यजते। देवसुवामेतानि हवीꣳषि भवन्ति। एतावन्तो वै देवानाꣳसवाः। त एवास्मै सवान् प्रयच्छन्ति। त एनं पुनः सुवन्ते राज्याय। देवसू राजा भवति।

श्रीं ह्रीं क्लीं ॐ स्वस्ति साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यम्।

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।**

राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे। स मे कामान् कामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय- महाराजाय नमः।

३ सिद्धलक्ष्मीसहितश्रीमहागणपतये नमः कर्पूरनीराजनं दर्शयामि।

## मन्त्रपुष्पम्

योऽपां पुष्पं वेद। पुष्पवान् प्रजावान् पशुमान् भवति।
चन्द्रमा वा अपां पुष्पम्। पुष्पवान् प्रजावान् पशुमान् भवति।

श्रीं ह्रीं क्लीं **ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि।**
**तन्नो दन्ती प्रचोदयात्।।**

श्रीं ह्रीं क्लीं- **नमो नरगजाकृते नलिनवर्णदेहाकृते**
**नरासुरसुरेडित - श्रुतिशिरोद्यदङ्घ्रिद्वय ।**
**नगेश्वरवरात्मजानयनपद्मभानो नमः**
**नतार्तिहरणाङ्घ्रियुक् कलित एष पुष्पाञ्जलिः।।**

श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहित-श्रीमहागणपतये नमः पुष्पाञ्जलिं समर्पयामि।

## तान्त्रिकनित्यहोमविधिः

साधकः स्वस्तिपद्मं विरच्य तस्मिन् गणेशं साङ्गं सावरणं षोडषोपचारैः सम्पूज्य तदुत्तरतः लौकिकाग्निः प्रतिष्ठाप्य। तस्मिन्नग्नौ साङ्गं सावरणं गणपतिं सम्पूज्य अष्टद्रव्यैः मध्वाज्यमिश्रितैः ग्रासमितैः त्रिसंख्यं पञ्चसंख्यं वा हुनेत्। संभृताष्टद्रव्यं त्रिधा कृत्वा एकमंशं निवेदयेत्- द्वावंशौ जुहुयात्। ततः जपं कृत्वा गणपत्युपनिषदादिभिः स्तुवीत। पुनः पञ्चोपचारान् उपचर्य, नीराजनं

प्रदक्षिणनमस्कारादि कृत्वा। अग्नेः स्वस्तिपद्यादपि गणपतिं उद्वासयेत्। अष्टद्रव्यालाभे तु नारिकेलेन मध्वाज्यगुडश्रितेन यथासम्भवद्रव्येण जुहुयात्।

*इति नित्यहोमविधिः।*

विस्तरे तु गुरूपदिष्टमार्गेण चतुष्पात्रप्रयोगेणापि होमः कर्तव्यः। तस्मिन् प्रयोगे अग्निमुखानन्तरम्, अग्नौ गणपतिमावाह्य पञ्चोपचारं कृत्वा गणपतिमूलमन्त्रेण प्रधानाहुतिं दत्वा दशवारं मूलमन्त्रेण अङ्गावरणदेवतानां एकैकामाज्याहुतिं जुहुयात्। ततो होमशेषः। स्वस्वशाखोक्तविधिना अग्निप्रतिष्ठापनं कुर्यात्।

## बलिदानम्

देवतादक्षभागे सामान्यार्घ्योदकेन वृत्तचतुरस्रात्मकं मण्डलं परिकल्प्य

**श्रीं ह्रीं क्लीं ऐं व्यापकमण्डलाय नमः।** इति गन्धाक्षतैरभ्यर्च्य अर्धभक्तपूरितोदकं सक्षीरादित्रयं बलिपात्रं तत्र विन्यस्य–

**श्रीं ह्रीं क्लीं ॐ गां गीं गूं गैं गौं गः महागणपतये वरवरद सर्वजनं मे वशमानय सर्वोपचारसहितं इमं बलिं गृह्ण गृह्ण स्वाहा।**

इत्युच्चरन्। बलिपात्रे सामान्यार्घ्योदकं विसृजेत्। ततः पादौ प्रक्षाल्य आचम्य त्रिः प्रदक्षिणनमस्कारान् कृत्वा यथाशक्ति मूलमन्त्रजपमाचरेत्। उत्तराङ्गं विधाय–

**गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।**
**सिद्धिर्भवतु मे देव त्वत्प्रसादान्मयि स्थिरा।।**

(इति देवस्य हस्ते जपं समर्पयेत्)। ततः स्तुवीत। यथा–

## सदाशिवप्रोक्तं गणेशाष्टकम्

श्रीभगवानुवाच–

**गणेशस्य स्तवं वक्ष्ये कलौ झटिति सिद्धिदम्।**
**न न्यासो न च संस्कारो न होमो न च तर्पणम्।।**
**न मार्जनं च पञ्चाढ्यं सहस्रजपमात्रतः।**
**सिद्ध्यत्यर्चनतः पञ्चशतब्राह्मणभोजनात्।।**

अस्य श्रीगणपतिस्तोत्रमालामन्त्रस्य भगवान् श्रीसदाशिव ऋषिः उष्णिक् छन्दः, श्रीमहागणपतिर्देवता श्रीमहागणपतिप्रसादसिद्ध्यर्थे जपे विनियोगः।

ॐ विनायकैकभावनासमर्चनासमर्पितं,
प्रमोदकैः प्रमोदकैः प्रमोदमोदमोदकम् ।
यदर्पितं समर्पितं नवन्यधान्यनिर्मितं,
न खण्डितं न खण्डितं न खण्डमण्डनं कृतम्।। १।।
सजातिकृद्विजातिकृत्स्वनिष्ठभेदवर्जितं
निरञ्जनं च निर्गुणं निराकृतिं च निष्क्रियम्।
सदात्मकं चिदात्मकं सुखात्मकं परं पदं
भजामि तं गजाननं स्वमाययाऽऽत्तविग्रहम्।। २।।
गणाधिप त्वमष्टमूर्तिरीशसूनुरीश्वरः
त्वमम्बरं च शम्बरं धनञ्जयः प्रभञ्जनः।
त्वमेव दीक्षितः क्षितिर्निशाकरः प्रभाकरः
चराचरप्रचारहेतुरन्तरायशान्तिकृत् ।। ३।।
अनेकदं तमालनीलमेकदन्तसुन्दरं
गजाननं नुमो गजाननामृताब्धिमन्दिरम्।
समस्तवेदवादसत्कलाकलापमन्दिरं
महान्तरायदुस्तमश्शमार्कमाश्रितोदरम् ।। ४।।
सरत्नहेमघण्टिकानिनादनूपुरस्वनैः
मृदङ्गतालनादभेदसाधनानुरूपतः।
धिमिद्धिमित्ततोऽङ्गतोङ्गथेयिथेयिशब्दतो
विनायकश्शशाङ्कशेखराग्रतः प्रनृत्यति ।। ५।।
नमामि नाकनायकैकनायकं विनायकं
कलाकलापकल्पनानिदानमादिपूरुषम्।
गणेश्वरं गुणेश्वरं महेश्वरात्मसम्भवं
स्वपादमूलसेविनामपारवैभवप्रदम् ।। ६।।
भजे प्रचण्डतुन्दिलं सदन्दशूकभूषणं
सनन्दनादिवन्दितं समस्तसिद्धसेवितम्।

सुरासुरौघयोस्तदा जयप्रदं भयप्रदं
समस्तविघ्नघातिनं स्वभक्तपक्षपातिनम् ।। ७।।
कराम्बुजात्तकङ्कणःपदाब्जकिङ्किणीगणो
गणेश्वरो गुणार्णवः फणीश्वराङ्गभूषणः।
जगत्त्रयान्तरायशान्तिकारकोस्तु तारको-
भवार्णवादनेकदुर्गृहाच्चिदेकविग्रहः ।। ८।।
**यो भक्तिप्रवणः परावरगुरोस्स्तोत्रं गणेशाष्टकं**
शुद्धस्संयतचेतसा यदि **पठेन्नित्यं** त्रिसन्ध्यं पुमान्।
**तस्य श्रीरतुला स्वसिद्धिसहिता श्रीशारदा सारदा**
**स्यातां तत्परिचारिके किल तदा काः कामनानां कथाः।।**
इति।

## सुवासिनीपूजा

प्राङ्निमन्त्रितां सुवासिनीमाहूय तां देवीरूपां विभाव्य **३ ऐं क्लीं सौः सुवासिन्यै अर्घ्यं कल्पयामि** नमः। इत्यादिरीत्या अर्घ्य-आचमन-स्नान-गन्ध-हरिद्रा-कुङ्कुम-पुष्प-धूप-दीप-नैवेद्य-ताम्बूलानि दद्यात्। (सति विभवे वसनादीनि च)।

## बटुकपूजा

प्राङ्निमन्त्रितबटुकमाहूय तं गणपतिरूपं विभाव्य **३ वं बटुकाय अर्घ्यं कल्पयामि नमः**। इत्यादिरीत्या अर्घ्य-आचमन-स्नान-वस्त्र- यज्ञोपवीत-**गन्ध**-पुष्प-धूप-दीप-नैवेद्य-ताम्बूलानि दद्यात्।

## सामयिकपूजा

ततः संनिहिते गुरौ गुरुं नत्वा गन्धकुङ्कुमादिभिरुपचर्य, गुरुपादुकामन्त्रेण अभिपूज्य पात्राणि समर्पयेत्। असन्निहिते गुरौ स्वशिरसि गुरुत्रयं यजेत्। ततः सन्निहितान् सामयिकानाहूय गन्धकुङ्कुमादिभिरुपचर्य पात्राणि दद्यात्। पश्चात् तत्त्वशोधनं कुर्यात्। सामयिकाश्च पात्रमादाय समस्तप्रकटेत्यादि- समष्टिमन्त्रेण

पुष्पाञ्जलिं दत्वा स्वशिरसि गुरुत्रयं, हृदये आत्मचतुष्टयं च इष्ट्वा देवं **सन्तर्प्य** तत्त्वशोधनं यथोपदिष्टं कुर्युः।

## तत्त्वशोधनम्

श्री ह्रीं क्लीं ॐ गम् आत्मतत्त्वं शोधयामि स्वाहा।
श्री ह्रीं क्लीं ॐ गं विद्यातत्त्वं शोधयामि स्वाहा।
श्री ह्रीं क्लीं ॐ गं शिवतत्त्वं शोधयामि स्वाहा।
श्री ह्रीं क्लीं ॐ गं सर्वतत्त्वं शोधयामि स्वाहा।

## पूजासमर्पण–देवतोद्वासने

श्रीं ह्रीं क्लीं **साधु वाऽसाधु वा कर्म यद्यदाचरितं मया।**
**तत्सर्वं कृपया देव गृहाणाराधनं मम।।**
३ **देव नाथ गुरो स्वामिन् देशिक स्वात्मनायक।**
**त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरां कुरु।।**

इति देवतादक्षिणहस्ते पूजां समर्प्य शङ्खमुद्धृत्य देवतोपरि **त्रिः** परिभ्राम्य, तज्जलं हस्ते समादाय सामयिकानात्मानं च मूलेन प्रोक्ष्य **शङ्खं** प्रक्षाल्य निदध्यात्। ततो मूलेन तीर्थनिर्माल्ये स्वीकृत्य,

श्रीं ह्रीं क्लीं **ज्ञानतोऽज्ञानतो वापि यन्मयाचरितं विभो।**
**तव कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वर।।**

इति क्षमाप्य, सर्वासामारवणदेवतानां देवताङ्गे विलयं विभाव्य **खेचरीं** बद्ध्वा–

श्रीं ह्रीं क्लीं **हृत्पद्मकर्णिकामध्ये शक्त्या सह गजानन।।**
प्रविश त्वं गणेशान **सर्वैरावरणैः** सह।।

इति तेजोरूपेण परिणतं देवं पूर्ववत् हृदयं नीत्त्वा, तत्र च मूर्तिं पञ्चोपचारैः सम्पूज्य पुनः आत्माभिन्नसंविद्रूपेण भावयेत्।

## शान्तिस्तवः

सम्पूजकानां परिपालकानां यतेन्द्रियाणाञ्च तपोधनानाम्।
देशस्य राष्ट्रस्य कुलस्य राज्ञां करोतु शान्तिं भगवान् कुलेशः।।
नन्दन्तु साधककुलान्यणिमाऽऽदिसिद्धाः
शापाः पतन्तु समयद्विषि योगिनीनाम्।
सा शाम्भवी स्फुरतु काऽपि ममाऽप्यवस्था
यस्यां गुरोश्चरणपङ्कजमेव लभ्यम्।।
शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम्।
कालाग्न्यादिशिवान्तं च जगद्यज्ञेन तृप्यतु।।

इत्यादिशान्तिश्लोकान् पठित्वा–

## विशेषार्घ्योद्वासनम्

मूलेन विशेषार्घ्यपात्रम् आमस्तकमुद्धृत्य तत्क्षीरं पात्रान्तरेण आदाय 'आर्द्रं ज्वलति' इति मन्त्रेण आत्मनः कुण्डलिन्यग्नौ हुत्वा ब्राह्मणान् सुवासिनीश्च भोजयित्वा स्वयमपि भुक्त्वा यथासुखं विहरेत्।

।। इति शिवम्।।

## श्रीगणेशपञ्चरत्नस्तोत्रम्

मुदाकरात्तमोदकं सदाविमुक्तिसाधकम्
कलाधरावतंसकं विलासिलोकरक्षकम् ।
अनायकैकनायकं विनाशितेभदैत्यकम्
नताशुभाशुनाशकं नमामि तं विनायकम् ।।१।।
नतेतरातिभीकरं नवोदितार्कभास्वरम्
नमत्सुरारिनिर्जरं नताधिकापदुद्धरम् ।
सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं
महेश्वरं तमाश्रये परात्परं निरन्तरम् ।।२।।

समस्तलोकशङ्करं निरस्तदैत्यकुञ्जरम्
दरेतरोदरं वरं वरेभवक्त्रमक्षरम् ।
कृपाकरं क्षमाकरं मुदाकरं यशस्करम्
नमस्करं नमस्कृतां नमस्करोमि भास्वरम् ॥३॥
अकिञ्चनार्तिमार्जनं चिरन्तनोक्तिभाजनम्
पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम् ।
प्रपञ्चनाशभीषणं धनञ्जयादिभूषणम्
कपोलदानवारिणं भजे पुराणवारणम् ॥४॥
अचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम्
नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मजम् ।
हृदन्तरे निरन्तरं वसन्तमेव योगिनां
तमेकदन्तमेव संविचिन्तयामि सन्ततम् ॥५॥
महागणेशपञ्चरत्नमादरेण योऽन्वहम्
प्रजल्पति प्रदोषके हृदि स्मरन् गणेश्वरम् ।
अरोगतामदोषतां सुसाहितीं सुपुत्रताम्
समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात् ॥६॥

*इति शङ्कराचार्यकृतं गणेशपञ्चरत्नस्तोत्रं सम्पूर्णम्।*

## गणपत्यथर्वशीर्षम्

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिः व्यशेम देवहितं यदायुः॥१॥
ॐस्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्तिनस्ताक्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥२॥
ॐ शान्तिः शान्तिः शान्तिः।

अथ गणेशाथर्वशीर्षं व्याख्यास्यामः॥

ॐ नमस्ते गणपतये। त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्तासि। त्वमेव केवलं धर्तासि। त्वमेव केवलं हर्तासि। त्वमेव सर्वं खल्विदं ब्रह्मासि। त्वं साक्षादात्मासि नित्यम्।।१।। ऋतं वच्मि। सत्यं वच्मि।।२।। अव त्वं माम्। अव वक्तारम्। अव श्रोतारम्। अव दातारम्। अव धातारम्। अवानूचानमव शिष्यम्। अव पश्चात्तात्। अव पुरस्तात्। अवोत्तरात्तात्। अव दक्षिणात्तात्। अव चोर्ध्वात्तात्। अवाधरात्तात्। सर्वतो मां पाहि पाहि समन्तात्।।३।। त्वं वाङ्मयस्त्वं चिन्मयः। त्वामानन्दमयस्त्वं ब्रह्ममयः। त्वं सच्चिदानन्दाद्वितीयोऽसि। त्वं प्रत्यक्षं ब्रह्मासि। त्वं ज्ञानमयो विज्ञानमयोऽसि।।४।। सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वत्तस्तिष्ठति। सर्वं जगदिदं त्वयि लयमेष्यति। सर्वं जगदिदं त्वयि प्रत्येति। त्वं भूमिरापोऽनलोऽनिलो नभः। त्वं चत्वारि वाक्पदानि।।५।। त्वं गुणत्रयातीतः। त्वं देहत्रयातीतः। त्वं कालत्रयातीतः। त्वं मूलाधारस्थितोऽसि नित्यम्। त्वं शक्तित्रयात्मकः। त्वां योगिनो ध्यायन्ति नित्यम्। त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्मभूर्भुवः स्वरोम्।।६।। गणादिं पूर्वमुच्चार्य वर्णादिं तदनन्तरम्। अनुस्वारः परतरः। अर्धेन्दुलसितम्। तारेण रुद्धम्। एतत्तव मनुस्वरूपम्। गकारः पूर्वरूपम्। अकारो मध्यमरूपम्। अनुस्वारश्चान्त्यरूपम्। बिन्दुरुत्तररूपम्। नादः सन्धानम्। संहिता सन्धिः। सैषा गणेशविद्या। गणक ऋषिः। निचृद्गायत्री छन्दः। गणपतिर्देवता। ॐ गं गणपतये नमः।।७।। एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्।।८।।

एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम्।।
रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम्।
रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम्।
रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम्।
भक्तानुकम्पिनं देवं जगत्कारणमच्युतम्।
आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम्।
एवं ध्यायति यो नित्यं स योगी योगिनां वरः।।९।।

नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय वरदमूर्तये नमः।।१०।। एतदथर्वशीर्षं योऽधीते। स ब्रह्मभूयाय कल्पते। स सर्वविघ्नैर्न बाध्यते। स

सर्वतः सुखमेधते। स पञ्चमहापापात्प्रमुच्यते। सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायंप्रातः प्रयुञ्जानो अपापो भवति। सर्वत्राधीयानोऽपविघ्नो भवति। धर्मार्थकाममोक्षं च विन्दति। इदमथर्वशीर्षमशिष्याय न देयम्। यो यदि मोहाद्दास्यति स पापीयान् भवति। सहस्रावर्तनात्। यं यं काममधीते तं तमनेन साधयेत्। अनेन गणपतिमभिषिञ्चति। स वाग्मी भवति। चतुर्थ्यामनश्नञ्जपति। स विद्यावान्भवति। इत्यथर्वणवाक्यम्। ब्रह्माद्यावरणं विद्यात्। न बिभेति कदाचनेति। यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति। यो लाजैर्यजति स यशोवान्भवति स मेधावान्भवति। यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति। यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते। अष्टौ ब्राह्मणान् सम्यग् ग्राहयित्वा सूर्यवर्चस्वी भवति। सूर्यग्रहे महानद्यां प्रतिमा सन्निधौ वा जप्त्वा सिद्धमन्त्रो भवति महाविघ्नात्प्रमुच्यते। महादोषात्प्रमुच्यते। महाप्रत्ययवायात्प्रमुच्यते। स सर्वविद्भवति स सर्वविद्भवति। य एवं वेद। इत्युपनिषत्।। ॐ भद्रं कर्णेभिः०।।१।। स्वस्ति न इन्द्रो०।।१।।

*।।इति गणपत्यथर्वशीर्षं सम्पूर्णम्।।*

## पुरश्चरणविधिः

एवं नित्यक्रमं प्रवर्तयन् श्यामाक्रमे वक्ष्यमाणेन विधिना अष्टाविंशति-सहस्रसंख्यं पुरश्चरणजपः। प्रकृते कलियुगत्वाच्चतुर्गुणितम्। प्रथमेऽह्नि-सहस्रम्। ततः प्रत्यहं सहस्रसंख्यश्च कृत्वा जपदशांशेन होमः। तद्दशांशेन तर्पणम्, तद्दशांशेन ब्राह्मणभोजनानि च विदध्यात्।

### होमे द्रव्याणि

**मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः।**
**नारिकेलैस्तिलैश्शुद्धैस्सुपक्वैः कदलीफलैः।।**

इत्युक्तान्यष्टौ, एतेषां प्रमाणन्तु-

मोदकाः अखण्डिताः ग्रासमिताः, पृथुकलाजसक्तवो मुष्टिपरिमिताः। इक्षुप्रमाणं श्लोक एवोक्तम्। नारिकेलम् अष्टधा खण्डितम्। तिलाःचुलुक-

प्रमाणाः शतसंख्याकाः वा। कदलीफलमल्पम्- यद्यखण्डितम् पृथु चेद्यथारूचि खण्डितम्। अमीषां द्रव्याणां मधुक्षीरघृतसिक्तानां पृथक् पृथगाहुतयो होमसंख्या पिण्डाष्टमभागमिताः ३५० श्लोकपाठक्रमेण भवन्ति। अष्टद्रव्यहोमात् प्रागावरणदेवतानामेकैकाहुतिः प्रधानदेवतायै च दशाहुतयः ता आज्येनैव भवन्ति। तर्पणपूर्वाङ्गन्तु चतुरावृत्तितर्पणवदेव इत्थं पुरश्चरणेन सिद्धमनुः, स्वातन्त्र्येणोपास्तौ च श्रीक्रमोक्तेन क्रमेण नैमित्तिकार्चनपरः काम्यापेक्षी चेत् श्यामाक्रमे वक्ष्यमाणेन तत्तत्कामानुगुणेन द्रव्येणेष्ट्वा सिद्धसङ्कल्पः सुखी विहरेत्, इति शिवम्।

## श्रीमहागणपतिसहस्रनामावलिः

### ऋष्यादिन्यासः

अस्य श्रीमहागणति-सहस्रनाम-स्तोत्रमन्त्रस्य महागणपतये-ऋषये नमः शिरसि अनुष्टुप्छन्दसे नमः मुखे श्रीमहागणपति-देवतायै नमः हृदये गं बीजाय नमः, गुह्ये, हुं शक्तये नमः पादयोः, स्वाहा कीलकाय नमः नाभौ, महागणपतिप्रसादसिद्धये (अर्चने) जपे विनियोगाय नमः करसम्पुटे।

### करन्यास-षडङ्गन्यासौ

| | | | |
|---|---|---|---|
| गां | अङ्गुष्ठाभ्यां नमः, | गां | हृदयाय नमः |
| गीं | तर्जनीभ्यां नमः, | गीं | शिरसे स्वाहा |
| गूं | मध्यमाभ्यां नमः, | गूं | शिखायै वषट् |
| गैं | अनामिकाभ्यां नमः, | गैं | कवचाय हुम् |
| गौं | कनिष्ठिकाभ्यां नमः, | गौं | नेत्रत्रयाय वौषट् |
| गः | करतलकरपृष्ठाभ्यां नमः, | गः | अस्त्राय फट् |

**बीजापूरगदेक्षुकार्मुकरुजा चक्राब्जपाशोत्पल-**
**ब्रीह्यग्रस्वविषाणरत्नकलश-प्रोद्यत्कराम्भोरुहः ।**
**ध्येयो वल्लभया सपद्मकरया श्लिष्टोज्वलद्भूषया**
**विश्वोत्पत्ति-विपत्ति-संस्थितिकरो विघ्नेश इष्टार्थदः।।**

॥ श्रीः ॥

## श्रीमहागणपतिसहस्रनामावलिः

गं गणेश्वराय नमः
गं गणक्रीडाय नमः
गं गणनाथाय नमः
गं गणाधिपाय नमः
गं एकदंष्ट्राय नमः
गं वक्रतुण्डाय नमः
गं गजवक्त्राय नमः
गं महोदराय नमः
गं लम्बोदराय नमः
गं धूम्रवर्णाय नमः १०
गं विकटाय नमः
गं विघ्ननायकाय नमः
गं सुमुखाय नमः
गं दुर्मुखाय नमः
गं बुद्धाय नमः
गं विघ्नराजाय नमः
गं गजाननाय नमः
गं भीमाय नमः
गं प्रमोदाय नमः
गं आमोदाय नमः २०
गं सुरानन्दाय नमः
गं मदोत्कटाय नमः
गं हेरम्बाय नमः
गं शम्बराय नमः
गं शम्भवे नमः
गं लम्बकर्णाय नमः
गं महाबलाय नमः
गं नन्दनाय नमः
गं अलम्पटाय नमः
गं अभीरवे नमः ३०
गं मेघनादाय नमः
गं गणञ्जयाय नमः
गं विनायकाय नमः
गं विरूपाक्षाय नमः
गं धीरशूराय नमः
गं वरप्रदाय नमः
गं महागणपतये नमः
गं बुद्धिप्रियाय नमः
गं क्षिप्रप्रसादनाय नमः
गं रुद्रप्रियाय नमः ४०
गं गणाध्यक्षाय नमः
गं उमापुत्राय नमः
गं अघनाशनाय नमः
गं कुमारगुरवे नमः
गं ईशानपुत्राय नमः
गं मूषकवाहनाय नमः
गं सिद्धिप्रियाय नमः
गं सिद्धिपतये नमः

गं सिद्धाय नम:
गं सिद्धिविनायकाय नम: ५०
गं अविघ्नाय नम:
गं तुम्बुरवे नम:
गं सिंहवाहनाय नम:
गं मोहिनीप्रियाय नम:
गं कटङ्कटाय नम:
गं राजपुत्राय नम:
गं शालकाय नम:
गं सम्मिताय नम:
गं अमिताय नम:
गं कूष्माण्डसामसम्भूतये नम: ६०
गं दुर्जयाय नम:
गं धूर्जयाय नम:
गं जयाय नम:
गं भूपतये नम:
गं भुवनपतये नम:
गं भूतानां पतये नम:
गं अव्ययाय नम:
गं विश्वकर्त्रे नम:
गं विश्वमुखाय नम:
गं विश्वरूपाय नम: ७०
गं निधये नम:
गं घृणये नम:
गं कवये नम:
गं कवीनामृषभाय नम:
गं ब्रह्मण्याय नम:
गं ब्रह्मणस्पतये नम:
गं ज्येष्ठराजाय नम:
गं निधिपतये नम:
गं निधिप्रियपतिप्रियाय नम:
गं हिरण्मयपुरान्तःस्थाय नम: ८०
गं सूर्यमण्डलमध्यगाय नम:
गं कराहतिध्वस्तसिन्धुसलिलाय नम:
गं पूषदन्तभिदे नम:
गं उमाङ्केलिकुतुकिने नम:
गं मुक्तिदाय नम:
गं कुलपालनाय नम:
गं किरीटिने नम:
गं कुण्डलिने नम:
गं हारिणे नम:
गं वनमालिने नम: ९०
गं मनोमयाय नम:
गं वैमुख्यहतदैत्यश्रिये नम:
गं पादाहतिजितक्षितये नम:
गं सद्योजातस्वर्णमुञ्जमेखलिने नम:
गं दुर्निमित्तहृते नम:
गं दुस्स्वप्नहृते नम:
गं प्रसहनाय नम:
गं गुणिने नम:
गं नादप्रतिष्ठिताय नम:
गं सुरूपाय नम: १००

गं सर्वनेत्राधिवासाय नमः
गं वीरासनाश्रयाय नमः
गं पीताम्बराय नमः
गं खण्डरदाय नमः
गं खण्डेन्दुकृतशेखराय नमः
गं चित्राङ्कश्यामदशनाय नमः
गं भालचन्द्राय नमः
गं चतुर्भुजाय नमः
गं योगाधिपाय नमः
गं तारकस्थाय नमः ११०
गं पुरुषाय नमः
गं गजकर्णकाय नमः
गं गणाधिराजाय नमः
गं विजयस्थिराय नमः
गं गजपतिध्वजिने नमः
गं देवदेवाय नमः
गं स्मरप्राणदीपकाय नमः
गं वायुकीलकाय नमः
गं विपश्चिद्वरदाय नमः
गं नादोन्नादभिन्न–बलाहकाय नमः १२०
गं वराहरदनाय नमः
गं मृत्युञ्जयाय नमः
गं व्याघ्राजिनाम्बराय नमः
गं इच्छाशक्तिधराय नमः
गं देवत्रात्रे नमः
गं दैत्यविमर्दनाय नमः
गं शम्भुवक्त्रोद्भवाय नमः
गं शम्भुकोपघ्ने नमः
गं शम्भुहास्यभुवे नमः
गं शम्भुतेजसे नमः १३०
गं शिवाशोकहारिणे नमः
गं गौरीसुखावहाय नमः
गं उमाङ्गमलजाय नमः
गं गौरीतेजोभुवे नमः
गं स्वर्धुनीभवाय नमः
गं यज्ञकायाय नमः
गं महानादाय नमः
गं गिरिवर्ष्मणे नमः
गं शुभाननाय नमः
गं सर्वात्मने नमः १४०
गं सर्वदेवात्मने नमः
गं ब्रह्ममूर्ध्ने नमः
गं ककुप्श्रुतये नमः
गं ब्रह्माण्डकुम्भाय नमः
गं चिद्व्योमभालाय नमः
गं सत्यशिरोरुहाय नमः
गं जगज्जन्मलयोन्मेषनिमेषाय नमः
गं अग्न्यर्कसोमदृशे नमः
गं गिरीन्द्रैकरदाय नमः
गं धर्माधर्मोष्ठाय नमः १५०
गं सामबृंहिताय नमः

गं ग्रहर्क्षदशनाय नमः
गं वाणीजिह्वाय नमः
गं वासवनासिकाय नमः
गं कुलाचलांसाय नमः
गं सोमार्कघण्टाय नमः
गं रुद्रशिरोधराय नमः
गं नदीनदभुजाय नमः
गं सर्पाङ्गुलीकाय नमः
गं तारकानखाय नमः १६०
गं भ्रूमध्यसंस्थितकराय नमः
गं ब्रह्मविद्यामदोत्कटाय नमः
गं व्योमनाभये नमः
गं श्रीहृदयाय नमः
गं मेरुपृष्ठाय नमः
गं अर्णवोदराय नमः
गं कुक्षिस्थयक्षगन्धर्वरक्षः-
किन्नरमानुषाय नमः
गं पृथ्वीकटये नमः
गं सृष्टिलिङ्गाय नमः
गं शैलोरवे नमः १७०
गं दस्रजानुकाय नमः
गं पातालजङ्घाय नमः
गं मुनिपदे नमः
गं कालाङ्गुष्ठाय नमः
गं त्रयीतनवे नमः
गं ज्योतिर्मण्डललाङ्गूलाय नमः
गं हृदयालाननिश्चलाय नमः
गं हृत्पद्मकर्णिकाशालि-
वियत्केलिसरोवराय नमः
गं सद्भक्तध्याननिगडाय नमः
गं पूजावारीनिवारिताय नमः १८०
गं प्रतापिने नमः
गं कश्यपसुताय नमः
गं गणपाय नमः
गं विष्टपिने नमः
गं बलिने नमः
गं यशस्विने नमः
गं धार्मिकाय नमः
गं स्वोजसे नमः
गं प्रथमाय नमः
गं प्रथमेश्वराय नमः १९०
गं चिन्तामणिद्वीपपतये नमः
गं कल्पद्रुमवनालयाय नमः
गं रत्नमण्डपमध्यस्थाय नमः
गं रत्नसिंहासनाश्रयाय नमः
गं तीव्राशिरोधृतपदाय नमः
गं ज्वालिनीमौलिलालिताय नमः
गं नन्दानन्दितपीठश्रिये नमः
गं भोगदाभूषितासनाय नमः
गं सकामदायिनीपीठाय नमः
गं स्फुरदुग्रासनाश्रयाय नमः २००
गं तेजोवतीशिरोरत्नाय नमः

गं सत्यानित्यावर्तंसिताय नमः
गं सविघ्ननाशिनीपीठाय नमः
गं सर्वशक्त्यम्बुजाश्रयाय नमः
गं लिपिपद्मासनाधाराय नमः
गं वह्निधामत्रयाश्रयाय नमः
गं उन्नतप्रप्रदाय नमः
गं गूढगुल्फाय नमः
गं संवृत्तपार्ष्णिकाय नमः
गं पीनजङ्घाय नमः २१०
गं श्लिष्टजानवे नमः
गं स्थूलोरवे नमः
गं प्रोन्नमत्कटये नमः
गं निम्ननाभये नमः
गं स्थूलकुक्षये नमः
गं पीनवक्षसे नमः
गं बृहद्भुजाय नमः
गं पीनस्कन्धाय नमः
गं कम्बुकण्ठाय नमः
गं लम्बोष्ठाय नमः २२०
गं लम्बनासिकाय नमः
गं भग्नवामरदाय नमः
गं तुङ्गाय सव्यदन्ताय नमः
गं महाहनवे नमः
गं ह्रस्वनेत्रत्रयाय नमः
गं शूर्पकर्णाय नमः
गं निबिडमस्तकाय नमः
गं स्तबकाकारकुम्भाग्राय नमः
गं रत्नमौलये नमः
गं निरङ्कुशाय नमः २३०
गं सर्पहारकटीसूत्राय नमः
गं सर्पयज्ञोपवीतवते नमः
गं सर्पकोटीरकटकाय नमः
गं सर्पग्रैवेयकाङ्गदाय नमः
गं सर्पकक्ष्योदराबन्धाय नमः
गं सर्पराजोत्तरीयकाय नमः
गं रक्ताय नमः
गं रक्ताम्बरधराय नमः
गं रक्तमाल्यविभूषणाय नमः
गं रक्तेक्षणाय नमः २४०
गं रक्तकराय नमः
गं रक्तताल्वोष्ठपल्लवाय नमः
गं श्वेताय नमः
गं श्वेताम्बरधराय नमः
गं श्वेतमाल्यविभूषणाय नमः
गं श्वेतातपत्ररुचिराय नमः
गं श्वेतचामरवीजिताय नमः
गं सर्वावयवसम्पूर्णसर्वलक्षण–लक्षिताय नमः
गं सर्वाभरणशोभाढ्याय नमः
गं सर्वशोभासमन्विताय नमः २५०
गं सर्वमङ्गलमाङ्गल्याय नमः
गं सर्वकारणकारणाय नमः

गं सर्वदैककराय नमः
गं शार्ङ्गिणे नमः
गं बीजापूरिणे नमः
गं गदाधराय नमः
गं इक्षुचापधराय नमः
गं शूलिने नमः
गं चक्रपाणये नमः
गं सरोजभृते नमः २६०
गं पाशिने नमः
गं धृतोत्पलाय नमः
गं शालीमञ्जरीभृते नमः
गं स्वदन्तभृते नमः
गं कल्पवल्लीधराय नमः
गं विश्वाभयदैककराय नमः
गं वशिने नमः
गं अक्षमालाधराय नमः
गं ज्ञानमुद्रावते नमः
गं मुद्गरायुधाय नमः २७०
गं पूर्णपात्रिणे नमः
गं कम्बुधराय नमः
गं विधृतालिसमुद्गकाय नमः
गं मातुलुङ्गधराय नमः
गं चूतकलिकाभृते नमः
गं कुठारवते नमः
गं पुष्करस्थस्वर्णघटीपूर्णरत्नाभि–
वर्षकाय नमः
गं भारतीसुन्दरीनाथाय नमः
गं विनायकरतिप्रियाय नमः
गं महालक्ष्मीप्रियतमाय नमः २८०
गं सिद्धलक्ष्मीमनोरमाय नमः
गं रमारमेशपूर्वाङ्गाय नमः
गं दक्षिणोमामहेश्वराय नमः
गं महीवराहवामाङ्गाय नमः
गं रतिकन्दर्पपश्चिमाय नमः
गं आमोदमोदजननाय नमः
गं सप्रमोदप्रमोदनाय नमः
गं समेधितसमृद्धश्रिये नमः
गं ऋद्धिसिद्धिप्रवर्तकाय नमः
गं दत्तसौमुख्यसुमुखाय नमः २९०
गं कान्तिकन्दलिताश्रयाय नमः
गं मदनावत्याश्रिताङ्घ्रये नमः
गं कृत्तदौर्मुख्यदुर्मुखाय नमः
गं विघ्नसम्पल्लवोपघ्नसेवाय नमः
गं उन्निद्रमदद्रवाय नमः
गं विघ्नकृन्निघ्नचरणाय नमः
गं द्राविणीशक्तिसत्कृताय नमः
गं तीव्राप्रसन्ननयनाय नमः
गं ज्वालिनीपालितैकदृशे नमः
गं मोहिनीमोहनाय नमः ३००
गं भोगदायिनीकान्तिमण्डिताय नमः
गं कामिनीकान्तवक्त्रश्रिये नमः
गं अधिष्ठितवसुन्धराय नमः

गं वसुन्धरामदोन्नद्धमहाशङ्ख-
निधिप्रभवे नमः
गं नमद्वसुमतीमौलिमहापद्मनिधि-
प्रभवे नमः
गं सर्वसद्गुरुसंसेव्याय नमः
गं शोचिष्केशहृदाश्रयाय नमः
गं ईशानमूर्ध्ने नमः
गं देवेन्द्रशिखाय नमः
गं पवननन्दनाय नमः ३१०
गं अग्रप्रत्यग्रनयनाय नमः
गं दिव्यास्त्राणां प्रयोगविदे नमः
गं ऐरावतादिसर्वाशावारणा-
वरणप्रियाय नमः
गं वज्राद्यस्त्रपरीवाराय नमः
गं गणचण्डसमाश्रयाय नमः
गं जयाजयपरीवाराय नमः
गं विजयाविजयावहाय नमः
गं अजितार्चितपादाब्जाय नमः
गं नित्यानित्यावतंसिताय नमः
गं विलासिनीकृतोल्लासाय नमः ३२०
गं शौण्डीसौन्दर्यमण्डिताय नमः
गं अनन्तानन्तसुखदाय नमः
गं सुमङ्गलसुमङ्गलाय नमः
गं इच्छाशक्तिज्ञानशक्ति-
क्रियाशक्तिनिषेविताय नमः
गं सुभगासंश्रितपदाय नमः
गं ललिताललिताश्रयाय नमः
गं कामिनीकामनाय नमः
गं काममालिनीकेलिलालिताय नमः
गं सरस्वत्याश्रयाय नमः
गं गौरीनन्दनाय नमः ३३०
गं श्रीनिकेतनाय नमः
गं गुरुगुप्तपदाय नमः
गं वाचासिद्धाय नमः
गं वागीश्वरीपतये नमः
गं नलिनीकामुकाय नमः
गं वामारामाय नमः
गं ज्येष्ठामनोरमाय नमः
गं रौद्रीमुद्रितपादाब्जाय नमः
गं हुं बीजाय नमः
गं तुङ्गशक्तिकाय नमः ३४०
गं विश्वादिजननत्राणाय नमः
गं स्वाहाशक्तये नमः
गं सकीलकाय नमः
गं अमृताब्धिकृतावासाय नमः
गं मदघूर्णितलोचनाय नमः
गं उच्छिष्टगणाय नमः
गं उच्छिष्टगणेशाय नमः
गं गणनायकाय नमः
गं सार्वकालिकसंसिद्धये नमः
गं नित्यशैवाय नमः ३५०
गं दिगम्बराय नमः

गं अनपायाय नम:
गं अनन्तदृष्टये नम:
गं अप्रमेयाय नम:
गं अजरामराय नम:
गं अनाविलाय नम:
गं अप्रतिरथाय नम:
गं अच्युताय नम:
गं अमृताय नम:
गं अक्षराय नम: ३६०
गं अप्रतर्क्याय नम:
गं अक्षयाय नम:
गं अजय्याय नम:
गं अनाधाराय नम:
गं अनामयाय नम:
गं अमलाय नम:
गं अमोघसिद्धये नम:
गं अद्वैताय नम:
गं अघोराय नम:
गं अप्रतिमाननाय नम: ३७०
गं अनाकाराय नम:
गं अब्धिभूम्यग्निबलघ्नाय नम:
गं अव्यक्तलक्षणाय नम:
गं आधारपीठाय नम:
गं आधाराय नम:
गं आधाराधेयवर्जिताय नम:
गं आखुकेतनाय नम:
गं आशापूरकाय नमः
गं आखुमहारथाय नम:
गं इक्षुसागरमध्यस्थाय नम: ३८०
गं इक्षुभक्षणलालसाय नम:
गं इक्षुचापातिरेकश्रिये नम:
गं इक्षुचापनिषेविताय नम:
गं इन्द्रगोपसमानश्रिये नम:
गं इन्द्रनीलसमद्युतये नम:
गं इन्दीवरदलश्यामाय नम:
गं इन्दुमण्डलनिर्मलाय नम:
गं इध्मप्रियाय नम:
गं इडाभागाय नम:
गं इडाधाम्ने नम: ३९०
गं इन्दिराप्रियाय नम:
गं इक्ष्वाकुविघ्नविध्वंसिने नम:
गं इतिकर्तव्यतेप्सिताय नम:
गं ईशानमौलये नम:
गं ईशानाय नम:
गं ईशानसुताय नम:
गं ईतिघ्ने नम:
गं ईषणात्रयकल्पान्ताय नम:
गं ईहामात्रविवर्जिताय नम:
गं उपेन्द्राय नम: ४००
गं उडुभृन्मौलये नम:
गं उण्डेरकबलिप्रियाय नम:
गं उन्नताननाय नम:

गं उत्तुङ्गाय नमः
गं उदारत्रिदशाग्रगण्ये नमः
गं ऊर्जस्वते नमः
गं ऊष्मलमदाय नमः
गं ऊहापोहदुरासदाय नमः
गं ऋग्यजुस्सामसम्भूतये नमः
गं ऋद्धिसिद्धिप्रवर्तकाय नमः ४१०
गं ऋजुचित्तैकसुलभाय नमः
गं ऋणत्रयविमोचकाय नमः
गं स्वभक्तानां लुप्तविघ्नाय नमः
गं सुरद्विषां लुप्तशक्तये नमः
गं विमुखार्चानां लुप्तश्रिये नमः
गं लूताविस्फोटनाशनाय नमः
गं एकारपीठमध्यस्थाय नमः
गं एकपादकृतासनाय नमः
गं एजिताखिलदैत्यश्रिये नमः
गं एधिताखिलसंश्रयाय नमः ४२०
गं ऐश्वर्यनिधये नमः
गं ऐश्वर्याय नमः
गं ऐहिकामुष्मिकप्रदाय नमः
गं ऐरम्मदसमोन्मेषाय नमः
गं ऐरावतनिभाननाय नमः
गं ओङ्कारवाच्याय नमः
गं ओङ्काराय नमः
गं ओजस्वते नमः
गं ओषधिपतये नमः
गं औदार्यनिधये नमः ४३०
गं औद्धत्यधुर्याय नमः
गं औन्नत्यनिस्वनाय नमः
गं सुरनागानामङ्कुशाय नमः
गं सुरविद्विषामङ्कुशाय नमः
गं अःसमस्तविसर्गान्तपदेषु परिकीर्तिताय नमः
गं कमण्डलुधराय नमः
गं कल्पाय नमः
गं कपर्दिने नमः
गं कलभाननाय नमः
गं कर्मसाक्षिणे नमः ४४०
गं कर्मकर्त्रे नमः
गं कर्माकर्मफलप्रदाय नमः
गं कदम्बगोलकाकाराय नमः
गं कूष्माण्डगणनायकाय नमः
गं कारुण्यदेहाय नमः
गं कपिलाय नमः
गं कथकाय नमः
गं कटिसूत्रभृते नमः
गं खर्वाय नमः
गं खड्गप्रियाय नमः ४५०
गं खड्गखान्तान्तस्थाय नमः
गं खनिर्मलाय नमः
गं खल्वाटशृङ्गनिलयाय नमः
गं खट्वाङ्गिने नमः

गं खदुरासदाय नमः
गं गुणाढ्याय नम:
गं गहनाय नम:
गं गस्थाय नम:
गं गद्यपद्यसुधार्णवाय नम:
गं गद्यगानप्रियाय नम: ४६०
गं गर्जाय नम:
गं गीतगीर्वाणपूर्वजाय नम:
गं गुह्याचाररताय नम:
गं गुह्याय नम:
गं गुह्यागमनिरूपिताय नम:
गं गुहाशयाय नम:
गं गुहाब्धिस्थाय नम:
गं गुरुगम्याय नम:
गं गुरोर्गुरवे नम:
गं घण्टाघर्घरिकामालिने नम: ४७०
गं घटकुम्भाय नम:
गं घटोदराय नम:
गं चण्डाय नम:
गं चण्डेश्वरसुहृदे नम:
गं चण्डीशाय नम:
गं चण्डविक्रमाय नम:
गं चराचरपतये नम:
गं चिन्तामणिचर्वणलालसाय नम:
गं छन्दसे नम:
गं छन्दोवपुषे नम: ४८०

गं छन्दोदुर्लक्ष्याय नम:
गं छन्दविग्रहाय नम:
गं जगद्योनये नम:
गं जगत्साक्षिणे नम:
गं जगदीशाय नम:
गं जगन्मयाय नम:
गं जपाय नम:
गं जपपराय नम:
गं जप्याय नम:
गं जिह्वासिंहासनप्रभवे नम: ४९०
गं झलज्झल्लोल्लसद्दानझङ्कारि-
भ्रमराकुलाय नम:
गं टङ्कारस्फारसंरावाय नम:
गं टङ्कारिमणिनूपुराय नम:
गं ठद्वयीपल्लवान्तस्थ:सर्वमन्त्रैक-
सिद्धिदाय नम:
गं डिण्डिमुण्डाय नम:
गं डाकिनीशाय नम:
गं डामराय नम:
गं डिण्डिमप्रियाय नम:
गं ढक्कानिनादमुदिताय नम:
गं ढौकाय नम: ५००
गं ढुण्ढिविनाकाय नम:
गं तत्वानां परमाय तत्त्वाय नम:
गं तत्त्वम्पदनिरूपिताय नम:
गं तारकान्तरसंस्थानाय नम:

गं तारकाय नमः
गं तारकान्तकाय नमः
गं स्थाणवे नमः
गं स्थाणुप्रियाय नमः
गं स्थात्रे नमः
गं स्थावराय जङ्गमाय जगते नमः ५१०
गं दक्षयज्ञप्रमथनाय नमः
गं दात्रे नमः
गं दानवमोहनाय नमः
गं दयावते नमः
गं दिव्यविभवाय नमः
गं दण्डभृते नमः
गं दण्डनायकाय नमः
गं दन्तप्रभिन्नाभ्रमालाय नमः
गं दैत्यवारणदारणाय नमः
गं दंष्ट्रालग्नद्विपघटाय नमः ५२०
गं देवार्थनृगजाकृतये नमः
गं धन्यधान्यपतये नमः
गं धन्याय नमः
गं धनदाय नमः
गं धरणीधराय नमः
गं ध्यानैकप्रकटाय नमः
गं ध्येयाय नमः
गं ध्यानाय नमः
गं ध्यानपराणाय नमः
गं नन्दाय नमः ५३०
गं नन्दिप्रियाय नमः
गं नादाय नमः
गं नादमध्यप्रतिष्ठिताय नमः
गं निष्कलाय नमः
गं निर्मलाय नमः
गं नित्याय नमः
गं नित्यानित्याय नमः
गं निरामयाय नमः
गं परं व्योम्ने नमः
गं परं धाम्ने नमः ५४०
गं परमात्मने नमः
गं परम्पदाय नमः
गं परात्पराय नमः
गं पशुपतये नमः
गं पशुपाशविमोचकाय नमः
गं पूर्णानन्दाय नमः
गं परानन्दाय नमः
गं पुराणपुरुषोत्तमाय नमः
गं पद्मप्रसन्ननयनाय नमः
गं प्रणताज्ञानमोचनाय नमः ५५०
गं प्रमाणप्रत्ययातीयाय नमः
गं प्रणतार्तिनिवारणाय नमः
गं फलहस्ताय नमः
गं फणिपतये नमः
गं फेत्काराय नमः
गं फाणितप्रियाय नमः

गं बाणार्चिताङ्घ्रियुगलाय नमः
गं बालकेलिकुतूहलिने नमः
गं ब्रह्मणे नमः
५६० गं ब्रह्मार्चितपदाय नमः
गं ब्रह्मचारिणे नमः
गं बृहस्पतये नमः
गं वृहत्तमाय नमः
गं ब्रह्मपराय नमः
गं ब्रह्मण्याय नमः
गं ब्रह्मवित्प्रियाय नमः
गं वृहन्नादाग्र्यचीत्काराय नमः
गं ब्रह्माण्डावलिमेखलाय नमः
गं भ्रूक्षेपदत्तलक्ष्मीकाय नमः
५७० गं भर्गाय नमः
गं भद्राय नमः
गं भयापहाय नमः
गं भगवते नमः
गं भक्तिसुलभाय नमः
गं भूतिदाय नमः
गं भूतिभूषणाय नमः
गं भव्याय नमः
गं भूतालयाय नमः
गं भोगदात्रे नमः
५८० गं भ्रूमध्यगोचराय नमः
गं मन्त्राय नमः
गं मन्त्रपतये नमः

गं मन्त्रिणे नमः
गं मदमत्तमनोरमाय नमः
गं मेखलावते नमः
गं मन्दगतये नमः
गं मतिमत्कमलेक्षणाय नमः
गं महाबलाय नमः
गं महावीर्याय नमः
गं महाप्राणाय नमः ५९०
गं महामनसे नमः
गं यज्ञाय नमः
गं यज्ञपतये नमः
गं यज्ञगोप्त्रे नमः
गं यज्ञफलप्रदाय नमः
गं यशस्कराय नमः
गं योगगम्याय नमः
गं याज्ञिकाय नमः
गं याजकप्रियाय नमः
गं रसाय नमः
गं रसप्रियाय नमः
गं रस्याय नमः ६००
गं रञ्जकाय नमः
गं रावणार्चिताय नमः
गं रक्षोरक्षाकराय नमः
गं रत्नगर्भाय नमः
गं राज्यसुखप्रदाय नमः
गं लक्ष्याय नमः

गं लक्ष्यप्रदाय नमः
गं लक्ष्याय नमः ६१०
गं लयस्थाय नमः
गं लड्डुकप्रियाय नमः
गं लानप्रियाय नमः
गं लास्यपराय नमः
गं लाभकृते नमः
गं लोकविश्रुताय नमः
गं वरेण्याय नमः
गं वह्निवदनाय नमः
गं वन्द्याय नमः
गं वेदान्तगोचराय नमः ६२०
गं विकर्त्रे नमः
गं विश्वतश्चक्षुषे नमः
गं विधात्रे नमः
गं विश्वतोमुखाय नमः
गं वामदेवाय नमः
गं विश्वनेत्रे नमः
गं वज्रिवज्रनिवारणाय नमः
गं विश्वबन्धनविष्कम्भाधाराय नमः
गं विश्वेश्वरप्रभवे नमः
गं शब्दब्रह्मणे नमः ६३०
गं शमप्राप्याय नमः
गं शम्भुशक्तिगणेश्वराय नमः
गं शास्त्रे नमः
गं शिखाग्रनिलयाय नमः
गं शरण्याय नमः
गं शिखरीश्वराय नमः
गं षड्ऋतुकुसुमस्रग्विणे नमः
गं षडाधाराय नमः
गं षडक्षराय नमः
गं संसारवैद्याय नमः ६४०
गं सर्वज्ञाय नमः
गं सर्वभेषजभेषजाय नमः
गं सृष्टिस्थितिलयक्रीडाय नमः
गं सुरकुञ्जरभेदनाय नमः
गं सिन्दूरितमहाकुम्भाय नमः
गं सदसद्व्यक्तिदायकाय नमः
गं साक्षिणे नमः
गं समुद्रमथनाय नमः
गं स्वसंवेद्याय नमः
गं स्वदक्षिणाय नमः ६५०
गं स्वतन्त्राय नमः
गं सत्यसङ्कल्पाय नमः
गं सामगानरताय नमः
गं सुखिने नमः
गं हंसाय नमः
गं हस्तिपिशाचीशाय नमः
गं हवनाय नमः
गं हव्यकव्यभुजे नमः
गं हव्याय नमः
गं हुतप्रियाय नमः ६६०

गं हर्षाय नमः
गं हृल्लेखामन्त्रमध्यगाय नमः
गं क्षेत्राधिपाय नमः
गं क्षमाभर्त्रे नमः
गं क्षमापरपरायणाय नमः
गं क्षिप्रक्षेमकराय नमः
गं क्षेमानन्दाय नमः
गं क्षोणीसुरद्रुमाय नमः
गं धर्मप्रदाय नमः
गं अर्थदाय नमः ६७०
गं कामदात्रे नमः
गं सौभाग्यवर्धनाय नमः
गं विद्याप्रदाय नमः
गं विभवदाय नमः
गं भुक्तिमुक्तिफलप्रदाय नमः
गं आभिरूप्यकराय नमः
गं वीरश्रीप्रदाय नमः
गं विजयप्रदाय नमः
गं सर्ववश्यकराय नमः
गं गर्भदोषघ्ने नमः ६८०
गं पुत्रपौत्रदाय नमः
गं मेधादाय नमः
गं कीर्तिदाय नमः
गं शोकहारिणे नमः
गं दौर्भाग्यनाशनाय नमः
गं प्रतिवादिमुखस्तम्भाय नमः
गं रुष्टचित्तप्रसादनाय नमः
गं पराभिचारशमनाय नमः
गं दुःखभञ्जनकारकाय नमः
गं लवाय नमः ६९०
गं त्रुटये नमः
गं कलायै नमः
गं काष्ठायै नमः
गं निमेषाय नमः
गं तत्पराय नमः
गं क्षणाय नमः
गं घट्यै नमः
गं मुहूर्ताय नमः
गं प्रहराय नमः
गं दिवानक्ताय नमः ७००
गं अहर्निशाय नमः
गं पक्षाय नमः
गं मासाय नमः
गं अयनाय नमः
गं वर्षाय नमः
गं युगाय नमः
गं कल्पाय नमः
गं महालयाय नमः
गं राशये नमः
गं तारायै नमः ७१०
गं तिथये नमः
गं योगाय नमः

गं वाराय नमः
गं करणाय नमः
गं अंशकाय नमः
गं लग्नाय नमः
गं होरायै नमः
गं कालचक्राय नमः
गं मेरवे नमः
गं सप्तर्षिभ्यो नमः ७२०
गं ध्रुवाय नमः
गं राहवे नमः
गं मन्दाय नमः
गं कवये नमः
गं जीवाय नमः
गं बुधाय नमः
गं भौमाय नमः
गं शशिने नमः
गं रवये नमः
गं कालाय नमः ७३०
गं सृष्टये नमः
गं स्थितये नमः
गं विश्वस्मै स्थावराय जङ्गमाय नमः
गं यस्मै नमः
गं भुवे नमः
गं अद्भ्यो नमः
गं अग्नये नमः
गं मरुते नमः
गं व्योम्ने नमः
गं अहङ्कृतये नमः
गं प्रकृतये नमः ७४०
गं पुंसे नमः
गं ब्रह्मणे नमः
गं विष्णवे नमः
गं शिवाय नमः
गं रुद्राय नमः
गं ईशाय नमः
गं शक्तये नमः
गं सदाशिवाय नमः
गं त्रिदशेभ्यो नमः
गं पितृभ्यो नमः ७५०
गं सिद्धेभ्यो नमः
गं यक्षेभ्यो नमः
गं रक्षोभ्यो नमः
गं किन्नरेभ्यो नमः
गं साध्येभ्यो नमः
गं विद्याधरेभ्यो नमः
गं भूतेभ्यो नमः
गं मनुष्येभ्यो नमः
गं पशुभ्यो नमः
गं खगेभ्यो नमः ७६०
गं समुद्रेभ्यो नमः
गं सरिद्भ्यो नमः
गं शैलेभ्यो नमः

गं भूताय नमः
गं भव्याय नमः
गं भवोद्भवाय नमः
गं साङ्ख्याय नमः
गं पातञ्जलाय नमः
गं योगाय नमः
गं पुराणेभ्यो नमः ७७०
गं श्रुत्यै नमः
गं स्मृत्यै नमः
गं वेदाङ्गेभ्यो नमः
गं सदाचाराय नमः
गं मीमांसायै नमः
गं न्यायविस्तराय नमः
गं आयुर्वेदाय नमः
गं धनुर्वेदाय नमः
गं गान्धर्वाय नमः
गं काव्यनाटकाय नमः ७८०
गं वैखानसाय नमः
गं भागवताय नमः
गं सात्वताय नमः
गं पाञ्चरात्रकाय नमः
गं शैवाय नमः
गं पाशुपताय नमः
गं कालामुखाय नमः
गं भैरवशासनाय नमः
गं शाक्ताय नमः
गं वैनायकाय नमः ७९०
गं सौराय नमः
गं जैनाय नमः
गं आर्हतसंहितायै नमः
गं सते नमः
गं असते नमः
गं व्यक्ताय नमः
गं अव्यक्ताय नमः
गं सचेतनाय नमः
गं अचेतनाय नमः
गं बन्धाय नमः ८००
गं मोक्षाय नमः
गं सुखाय नमः
गं भोगाय नमः
गं अयोगाय नमः
गं सत्याय नमः
गं अणवे नमः
गं महते नमः
गं स्वस्ति नमः
गं हुं नमः
गं फट् नमः ८१०
गं स्वधा नमः
गं स्वाहा नमः
गं श्रौषड् नमः
गं वौषड् नमः
गं वषण्णमः

गं नमो नमः
गं ज्ञानाय नमः
गं विज्ञानाय नमः
गं आनन्दाय नमः
गं बोधाय नमः
गं संविदे नमः
गं शमाय नमः
गं यमाय नमः
गं एकस्मै नमः
गं एकाक्षराधाराय नमः
गं एकाक्षरपरायणाय नमः
गं एकाग्रधिये नमः
गं एकवीराय नमः
गं एकानेकस्वरूपधृते नमः
गं द्विरूपाय नमः
गं द्विभुजाय नमः
गं द्व्यक्षाय नमः
गं द्विरदाय नमः
गं द्वीपरक्षकाय नमः
गं द्वैमातुराय नमः
गं द्विवदनाय नमः
गं द्वन्द्वातीताय नमः
गं द्वयातिगाय नमः
गं त्रिधाम्ने नमः
गं त्रिकराय नमः
गं त्रेतायै नमः

गं त्रिवर्गफलदायकाय नमः
गं त्रिगुणात्मने नमः
गं त्रिलोकादये नमः
गं त्रिशक्तीशाय नमः
८२० गं त्रिलोचनाय नमः
गं चतुर्बाहवे नमः
गं चतुर्दन्ताय नमः
गं चतुरात्मने नमः
गं चतुर्मुखाय नमः
गं चतुर्विधोपायमयाय नमः ८५०
गं चतुर्वर्णाश्रमाश्रयाय नमः
गं चतुर्विधवचोवृत्तिपरिवृत्ति-
प्रवर्तकाय नमः
गं चतुर्थीपूजनप्रीताय नमः
८३० गं चतुर्थीतिथिसम्भवाय नमः
गं पञ्चाक्षरात्मने नमः
गं पञ्चात्मने नमः
गं पञ्चास्याय नमः
गं पञ्चकृत्यकृते नमः
गं पञ्चाधाराय नमः
गं पञ्चवर्णाय नमः ८६०
गं पञ्चाक्षरपरायणाय नमः
गं पञ्चतालाय नमः
गं पञ्चकराय नमः
८४० गं पञ्चप्रणवभाविताय नमः
गं पञ्चब्रह्ममयस्फूर्तये नमः

गं पञ्चावरणवारिताय नमः
गं पञ्चभक्ष्यप्रियाय नमः
गं पञ्चबाणाय नमः
गं पञ्चशिवात्मकाय नमः
गं षट्कोणपीठाय नमः ८७०
गं षट्चक्रधाम्ने नमः
गं षड्ग्रन्थिभेदकाय नमः
गं षडध्वध्वान्तविध्वंसिने नमः
गं षडङ्गुलमहाह्रदाय नमः
गं षण्मुखाय नमः
गं षण्मुखभ्रात्रे नमः
गं षट्शक्तिपरिवारिताय नमः
गं षड्वैरिवर्गविध्वंसिने नमः
गं षडूर्मिभयभञ्जनाय नमः
गं षट्तर्कदूराय नमः ८८०
गं षट्कर्मनिरताय नमः
गं षड्रसाश्रयाय नमः
गं सप्तपातालचरणाय नमः
गं सप्तद्वीपोरुमण्डलाय नमः
गं सप्तस्वर्लोकमुकुटाय नमः
गं सप्तसप्तिवरप्रदाय नमः
गं सप्ताङ्गराज्यसुखदाय नमः
गं सप्तर्षिगणमण्डिताय नमः
गं सप्तछन्दोनिधये नमः
गं सप्तहोत्रे नमः ८९०
गं सप्तस्वराश्रयाय नमः
गं सप्ताब्धिकेलिकासाराय नमः
गं सप्तमातृनिषेविताय नमः
गं सप्तच्छन्दोमोदमदाय नमः
गं सप्तच्छन्दोमखप्रभवे नमः
गं अष्टमूर्तिध्येयमूर्तये नमः
गं अष्टप्रकृतिकारणाय नमः
गं अष्टाङ्गयोगफलभुवे नमः
गं अष्टपत्राम्बुजासनाय नमः
गं अष्टशक्तिसमृद्धश्रिये नमः ९००
गं अष्टैश्वर्यप्रदायकाय नमः
गं अष्टपीठोपपीठश्रिये नमः
गं अष्टमातृसमावृताय नमः
गं अष्टभैरवसेव्याय नमः
गं अष्टवसुवन्द्याय नमः
गं अष्टमूर्तिभृते नमः
गं अष्टचक्रस्फुरन्मूर्तये नमः
गं अष्टद्रव्यहविःप्रियाय नमः
गं नवनागासनाध्यासिने नमः
गं नवनिध्यनुशासित्रे नमः ९१०
गं नवद्वारपुराधाराय नमः
गं नवाधारनिकेतनाय नमः
गं नवनारायणस्तुत्याय नमः
गं नवदुर्गानिषेविताय नमः
गं नवनाथमहानाथाय नमः
गं नवनागविभूषणाय नमः
गं नवरत्नविचित्राङ्गाय नमः

गं नवशक्तिशिरोधृताय नमः
गं दशात्मकाय नमः
गं दशभुजाय नमः ९२०
गं दशदिक्पतिवन्दिताय नमः
गं दशाध्यायाय नमः
गं दशप्राणाय नमः
गं दशेन्द्रियनियामकाय नमः
गं दशाक्षरमहामन्त्राय नमः
गं दशाशाव्यापिविग्रहाय नमः
गं एकादशादिभीरुद्रैः स्तुताय नमः
गं एकादशाक्षराय नमः
गं द्वादशोद्दण्डदोर्दण्डाय नमः
गं द्वादशान्तनिकेतनाय नमः ९३०
गं त्रयोदशाभिधाभिन्नविश्वेदेवाधि-
दैवताय नमः
गं चतुर्दशेन्द्रवरदाय नमः
गं चतुर्दशमनुप्रभवे नमः
गं चतुर्दशादिविद्याढ्याय नमः
गं चतुर्दशजगत्प्रभवे नमः
गं सामपञ्चदशाय नमः
गं पञ्चदशीशीतांशुनिर्मलाय नमः
गं षोडशाधारनिलयाय नमः
गं षोडशस्वरमातृकाय नमः
गं षोडशान्तपदावासाय नमः
गं षोडशेन्दुकलात्मकाय नमः ९४०
गं कलासप्तदश्यै नमः
गं सप्तदशाय नमः
गं सप्तदशाक्षराय नमः
गं अष्टादशद्वीपपतये नमः
गं अष्टादशपुराणकृते नमः
गं अष्टादशौषधीसृष्टये नमः
गं अष्टादशविधिस्मृताय नमः
गं अष्टादशलिपिव्यष्टिसमष्टिज्ञान-
कोविदाय नमः
गं एकविंशाय पुंसे नमः ९५०
गं एकविंशत्यङ्गुलिपल्लवाय नमः
गं चतुर्विंशतितत्त्वात्मने नमः
गं पञ्चविंशाख्यपूरुषाय नमः
गं सप्तविंशतितारेशाय नमः
गं सप्तविंशतियोगकृते नमः
गं द्वात्रिंशद्भैरवाधीशाय नमः
गं चतुस्त्रिंशन्महाह्रदाय नमः
गं षट्त्रिंशत्तत्वसम्भूतये नमः
गं अष्टत्रिंशत्कलातनवे नमः
गं नमदेकोनपञ्चाशन्मरुद्वर्ग-
निरर्गलाय नमः ९६०
गं पञ्चाशदक्षरश्रेण्यै नमः
गं पञ्चाशद्रुद्रविग्रहाय नमः
गं पञ्चाशद्विष्णुशक्तीशाय नमः
गं पञ्चाशन्मातृकालयाय नमः
गं द्विपञ्चाशद्वपुश्श्रेण्यै नमः
गं त्रिषष्ट्यक्षरसंश्रयाय नमः

गं चतुष्षष्ट्यर्णनिर्णेत्रे नमः
गं चतुष्षष्टिकलानिधये नमः
गं चतुष्षष्टिमहासिद्धयोगिनीवृन्द-
वन्दिताय नमः
गं अष्टषष्टिमहातीर्थक्षेत्रभैरव-
भावनाय नमः ९७०
गं चतुर्नवतिमन्त्रात्मने नमः
गं षण्णवत्यधिकप्रभवे नमः
गं शतानन्दाय नमः
गं शतधृतये नमः
गं शतपत्रायतेक्षणाय नमः
गं शतानीकाय नमः
गं शतमखाय नमः
गं शतधारावरायुधाय नमः
गं सहस्रपत्रनिलयाय नमः
गं सहस्रफणभूषणाय नमः ९८०
गं सहस्रशीर्ष्णे पुरुषाय नमः
गं सहस्राक्षाय नमः
गं सहस्रपदे नमः
गं सहस्रनामसंस्तुत्याय नमः
गं सहस्राक्षबलापहाय नमः
गं दशसाहस्रफणभृत्फणिराज-
कृतासनाय नमः
गं अष्टाशीतिसहस्राद्यमहर्षिस्तोत्र-
यन्त्रिताय नमः
गं लक्षाधीशप्रियाधाराय नमः
गं लक्षाधारमनोमयाय नमः
गं चतुर्लक्षजपप्रीताय नमः ९९०
गं चतुर्लक्षप्रकाशिताय नमः
गं चतुरशीतिलक्षाणां जीवानां
देहसंस्थिताय नमः
गं कोटिसूर्यप्रतीकाशाय नमः
गं कोटिचन्द्रांशुनिर्मलाय नमः
गं शिवाभवाध्युष्टकोटिविनायक-
धुरन्धराय नमः
गं सप्तकोटिमहामन्त्रमन्त्रितावयव-
द्युतये नमः
गं त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणत-
पादुकाय नमः
गं अनन्तनाम्ने नमः
गं अनन्तश्रिये नमः
गं अनन्तानन्तसौख्यदाय नमः १०००

पुनरपि ऋष्यादि-कराङ्गन्यासौ ध्यानञ्च विदध्यात्।

*श्रीगणपतिसहस्रनामावलिः सम्पूर्णा।।*

## श्रीगणेश्वरैकविंशतिनामानि

| | | | | | |
|---|---|---|---|---|---|
| गं | गणञ्जयाय नमः | १ | गं | निधये नमः | १२ |
| गं | गणपतये नमः | २ | गं | सुमङ्गलाय नमः | १३ |
| गं | हेरम्बाय नमः | ३ | गं | बीजाय नमः | १४ |
| गं | धरणीधराय नमः | ४ | गं | आशापूरकाय नमः | १५ |
| गं | महागणपतये नमः | ५ | गं | वरदाय नमः | १६ |
| गं | लक्षप्रदाय नमः | ६ | गं | शिवाय नमः | १७ |
| गं | क्षिप्रप्रसादनाय नमः | ७ | गं | काश्यपाय नमः | १८ |
| गं | अमोघसिद्धये नमः | ८ | गं | नन्दनाय नमः | १९ |
| गं | अमिताय नमः | ९ | गं | वाचसिद्धाय नमः | २० |
| गं | मन्त्राय नमः | १० | गं | ढुण्ढिविनायकाय नमः | २१ |
| गं | चिन्तामणये नमः | ११ | | | |

*इति–एकविंशतिनामानि*

**गणञ्जयो गणपतिर्हेरम्बो धरणीधरः।**
**महागणपतिर्लक्षप्रदः क्षिप्रप्रसादनः ।।**
**अमोघसिद्धिरमितो मन्त्रश्चिन्तामणिर्निधिः।**
**सुमङ्गलो बीजमाशापूरको वरदःशिवः।।**
**काश्यपो नन्दनो वाचासिद्धो ढुण्ढिविनायकः।**
**मोदकैरेभिरत्रैकविंशत्या नामभिः पुमान्।।**
**यः स्तौति मद्गतमना मदाराधनतरत्परः।**
**स्तुतो नाम्नां सहस्रेण तेनाहं नात्र संशयः।।**
**नमो नमः सुरवरपूजिताङ्घ्रये नमो नमो निरुपममङ्गलात्मने।**
**नमो नमो विपुलपदैकसिद्धये नमो नमः करिकलभाननाय ते।।**

*षोडशानन्दनाथश्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे*

*श्रीमहागणपतिक्रमः सम्पूर्णः।*

# अथ श्री–क्रमः

## प्रथमम् आह्निकप्रकरणम्

*(ब्राह्ममुहूर्तकृत्यं मन्त्रमहार्णवश्रीविद्यार्णवनित्योत्सवादिषु प्रतिपादितम्)*

(ब्राह्मे मुहूर्ते चोत्थाय निद्रास्थानाद् बहिर्निर्गत्य पादौ मुखं च प्रक्षाल्याचम्य रात्रिवस्त्रं परित्यज्य शुद्धवस्त्रं परिधाय शुद्धासने उपविश्य शिरसि सहस्रारे श्वेतवर्णं स्वगुरुं ध्यायेत्)

आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधरूपम्।
योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं भजामि।।

### श्रीगुरुपादुकापञ्चकम्

ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीविवरकाण्डमण्डितं द्वादशार्णसरसीरुहं भजे।।१।।
तस्य कन्दलितकर्णिकापुटे क्लृप्तरेखमकथादिरेखया।
कोणलक्षितहळक्षमण्डलीं भावलक्ष्यमबलालयं भजे।।२।।
तत्पुटे पटुतडित्कडारिमस्पर्द्धमानमणिपाटलप्रभम् ।
चिन्तयामि हृदि चिन्मयं वपुर्नादबिन्दुमणिपीठमुज्ज्वलम्।।३।।
ऊर्ध्वमस्य हुतभुक्शिखात्रयं तद्विलासपरिबृंहणास्पदम्।
विश्वघस्मरमहोच्चिदोत्कटं व्यामृशामि युगमादिहंसयोः।।४।।
तत्र नाथचरणारविन्दयोः कुङ्कुमासवपरीमरन्दयोः ।
द्वन्द्वबिन्दुमकरन्दशीतलं मानसं स्मरति मङ्गलास्पदम्।।५।।

निषक्तमणिपादुका–नियमितौघकोलाहलं,
स्फुरत्किसलयारुणं नखसमुल्लसच्चन्द्रकम्।
परामृतसरोवरोदितसरोजसद्रोचिषं,
भजामि शिरसि स्थितं गुरुपदारविन्दद्वयम्।।६।।
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः।।७।।

### श्रीगुरुपञ्चकम्

नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे।
विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह।।१।।

नवाय नवरूपाय परमार्थस्वरूपिणे।
सर्वाज्ञानतमो-भेद-भानवे चिद्घनाय ते।।२।।
स्वतन्त्राय दयाक्लृप्त-विग्रहाय शिवात्मने।
परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे।।३।।
विवेकिनां विवेकाय विमर्शाय विमर्शिनाम्।
प्रकाशानां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे।।४।।
पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः।
सदा मच्चित्तरूपेण विधेहि भवदासनम्।।५।।
इत्येवं पञ्चभिः श्लोकैः स्तुवीत यतमानसः।
प्रातः प्रबोध-समये जपात् सुदिवसं भवेत्।।६।।

ऐं ह्रीं श्रीं हस्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः स्वरूपनिरूपणहेत्वमुकाम्बासहितगुरुश्रीपादुकां पूजयामि नमः।
स्वच्छप्रकाशविमर्शहेत्वमुकाम्बासहितपरमगुरुश्रीपादुकां पूजयामि नमः।
स्वात्मारामपञ्जरविलीनतेजस्कामुकाम्बासहितपरमेष्ठिगुरुश्रीपादुकां पूजयामि नमः।
(इति गुरु-परमगुरु-परमेष्ठिगुरु-पादुकापूजनं भावयेत्।)

## श्रीगुरुप्रणतिः

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः।।
वन्दे गुरु-पद-द्वन्द्वमवाङ्मनसगोचरम्।
रक्त-शुक्ल-प्रभा-मिश्रमतर्क्यं त्रैपुरं महः।।

(इति प्रणम्य प्राणानायम्य च तच्चरणयुगलविगलदमृतरसविसरपरिपुताखिलाङ्गमात्मानं भावयेत्)।

## इष्ट-मन्त्र-भावनम्

ततश्च सर्वचैतन्यात्मिकां जाग्रदाद्यवस्थात्रयावभासिकां सर्वाधिष्ठानरूपां प्रत्यक्चैतन्याभिन्नब्रह्मात्मिकां सर्वचैतन्यविवर्जितामखण्डां चितिं भावयेत्। यथा-

आमूलाधारादाब्रह्मबिलं विलसन्तीं तडिल्लतासदृशाकृतिं तरुणारुण-पिञ्जरां तैजसीं ज्वलन्तीं कुण्डलीरूपां सर्वाधिष्ठानभूतां परां संविदं चिन्तयेत्। मूलमन्त्रं च दशवारमावर्तयेत्।

## कुण्डलिनी–मन्त्रजप–विधिः

नियमितपवनस्पन्दो मूलाधारे चतुर्दलपद्मे त्रिकोणात्मकं पीठस्थित–ज्योतिलिङ्गमावेष्ट्यावस्थितां सार्धत्रिवलयां 'हूं' बीजेनोत्थितां 'ऐं ह्रीं श्रीं' इति मन्त्रं च जपन् कुण्डलिनीं ध्यायेत्।

कुण्डलिनीमन्त्रः—

वाग्भवं भुवनेशी च श्रीबीजन्तु तथैव च।
त्र्यक्षरो मन्त्र आख्यातः कुण्डलिन्यास्सुसिद्धिदः।। १।।
ऋषिश्शक्तिस्समाख्यातो गायत्रीच्छन्द ईरितम्।
चेतनाकुण्डली शक्तिर्देवतात्र समीरिता।। २।।
वाग्भवं बीजमाम्नातं शक्तिः श्रीबीजमुच्यते।
हृल्लेखा कीलकं प्रोक्तं कुण्डलिन्यास्तु चिन्तने।। ३।।
विनियोगस्समाख्यातः सर्वागमविशारदैः।
बीजत्रयद्विरावृत्त्या षडङ्गन्यास ईरितः।। ४।।
ध्यानं वक्ष्यामि कुण्डल्यास्सावधानतया शृणु।
मूलाधारे त्रिकोणे तु सूर्यकोटिसमत्विषि।। ५।।
प्रसुप्तभुजगाकारां सार्धत्रिवलयस्थिताम्।
नीवारशुकवत्तन्वीं तडित्कोटिसमप्रभाम्।। ६।।
सूर्यकोटिप्रभां दीप्तां चन्द्रकोटिसुशीतलाम्।
शिवशक्तिमयीं देवीं शङ्खावर्तक्रमात्स्थिताम्।। ७।।
सुषुम्नामध्यमार्गेण यान्तीं परशिवावधि।
ह्रीङ्कारबीजरूपेण चिन्तयेद् योगवर्त्मना।। ८।।

अस्य श्रीकुण्डलिनीमन्त्रस्य शक्तिर्ऋषिर्गायत्री छन्दश्चेतना–कुण्डलिनी देवता ऐं बीजं श्रीं शक्तिः ह्रीं कीलकं श्रीकुण्डलिन्याश्चिन्तने विनियोगः।

(इति विनियोगं कृत्वा)

'ऐं ह्रीं श्रीं' इति मन्त्रेण करषडङ्गन्यासौ विधाय ध्यायेत्।

ध्यानम्

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर–
त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्।
पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थसव्यचरणां ध्यायेत्परामम्बिकाम्।।

## कुण्डलिनीस्तुतिः

मूलोन्निद्रभुजङ्गराजसदृशीं यान्तीं सुषुम्नान्तरं,
भित्त्वाधारसमूहमाशुविलसत्सौदामिनीसन्निभाम् ।
व्योमाम्भोजगतेन्दुमण्डलगलद्दिव्यामृतौघैः पतिं,
सम्भाव्य स्वगृहागतां पुनरिमां सञ्चिन्तयेत् कुण्डलीम्।। १।।

हंसं नित्यमनन्तमद्वयगुणं स्वाधारतो निर्गता,
शक्तिः कुण्डलिनी समस्तजननी हस्ते गृहीत्वा च तम्।।
याता शम्भुनिकेतनं परसुखं तेनानुभूय स्वयं,
यान्ती स्वाश्रममर्ककोटिरुचिरा ध्येया जगन्मोहिनी ।। २।।

अव्यक्तं परबिम्बमञ्चितरुचिं नीत्वा शिवस्यालयं,
शक्तिः कुण्डलिनी गुणत्रयवपुर्विद्युल्लतासन्निभा ।
आनन्दामृतकन्दगं पुरभिदं चन्द्रार्ककोटिप्रभं,
संवीक्ष्य स्वगृहं गता भगवती ध्येयाऽनवद्या गुणैः।। ३।।

मध्ये वर्त्म समीरणद्वयमिथस्सङ्घट्टसङ्क्षोभजं,
शब्दस्तोममतीत्य तेजसि तडित्कोटिप्रभाभास्वरे ।
उद्यन्तीं समुपास्महे नवजपासिन्दूरसान्द्रारुणां,
सान्द्रानन्दसुधामयीं परशिवं प्राप्तां परां देवताम्।। ४।।

गमनागमनेषु जाङ्घिकी सा तनुयाद् योगफलानि कुण्डली।
मुदिता कुलकामधेनुरेषा भजतां वाञ्छितकल्पवल्लरी।। ५।।

आधारस्थितशक्तिबिन्दुनिलयां नीवारशूकोपमां,
नित्यानन्दमयीं गलत्परसुधावर्षैः प्रबोधप्रदैः।
सिक्त्वा षट्सरसीरुहाणि विधिवत्कोदण्डमध्योदितां,
ध्यायेद् भास्वरबन्धुजीवरुचिरां संविन्मयीं देवताम्।। ६।।

हृत्पङ्केरुहभानुबिम्बनिलयां विद्युल्लतामन्थरां,
बालार्कारुणतेजसां भगवती निर्भर्त्सयन्तीं तमः।
नादाख्यां पदमर्धचन्द्रकुटिलां संविन्मयीं शाश्वतीं,
यान्तीमक्षररूपिणीं विमलधीर्ध्यायेद् विभुं तेजसाम्।। ७।।

भाले पूर्णनिशाकरप्रतिभटां नीहारहारत्विषा,
सिञ्चन्तीममृतेन देवममितेनानन्दयन्तीं तनुम्।
वर्णानां जननीं तदीयवपुषा संव्याप्य विश्वं स्थितां,
ध्यायेत् सम्यगनाकुलेन मनसा संविन्मयीमम्बिकाम्॥ ८॥

मूले भाले हृदि च विलसद्वर्णरूपा सवित्री,
पीनोत्तुङ्गस्तनभरनमन्मध्यदेशा महेशी।
चक्रे चक्रे गलितसुधया सिक्तगात्री प्रकामं,
दद्यादद्य श्रियमविकलां वाङ्मयी देवता नः॥ ९॥

आधारबन्धप्रमुखक्रियाभिः, समुत्थिता कुण्डलिनी सुधाभिः।
त्रिधामबीजं शिवमर्चयन्ती, शिवाङ्गना नः शिवमातनोतु॥ १०॥

निजभवननिवासादुच्चलन्ती विलासैः,
पथि पथि कमलानां चारु हासं विधाय।
तरुणतपनकान्तिः कुण्डली देवता सा,
शिवसदनसुधाभिर्दीपयेदात्मतेजः ॥ ११॥
सिन्दूरपुञ्जनिभमिन्दुकलावतंस-
मानन्दपूर्णनयनत्रयशोभिवक्त्रम्।
आपीनतुङ्गकुचनम्रमनङ्गतन्त्रं
शम्भोः कलत्रममितां श्रियमातनोतु॥ १२॥

वर्णैरर्णवषड्दिशारविकलाचक्षुर्विभक्तैः क्रमात्,
सान्तैरादिभिरावृतान् क्षहयुतैष्षट्चक्रमध्यानिमान्।
डाकिन्यादिभिराश्रितान् परिचितान् ब्रह्मादिभिर्देवतै-
र्भिन्दाना परदेवता त्रिजगतां चित्तेषु दत्तां मुदम्॥ १३॥

आधाराद् गुणवृत्तशोभिततनुं निर्गत्वरीं सत्वरं,
भिन्दन्तीं कमलानि चिन्मयघनानन्दप्रबोधोद्धुराम्।
सङ्क्षुब्धं ध्रुवमण्डलामृतकरप्रस्यन्दमानामृत-
स्रोतःकन्दलिताममन्दतडिदाकारां शिवां भावये॥ १४॥

मूलाधारे त्रिकोणे तरुणतरणिभाभास्वरे विभ्रमन्तं,
कामं बालार्ककालानलजरठकुरङ्गाङ्ककोटिप्रभाभम्।

विद्युन्मालासहस्रद्युतिरुचिरलसद्बन्धुजीवाभिरामं,
त्रैगुण्याक्रान्तबिन्दुं जगदुदयलयैकान्तहेतुं विचिन्त्य ।। १५।।

तस्योर्ध्वे विस्फुरन्तीं स्फुटरुचिरतडित्पुञ्जभाभास्वराङ्गी-
मुद्गच्छतीं सुषुम्नामनुसरणिशिखामाललाटेन्दुबिम्बम्।
चिन्मात्रां सूक्ष्मरूपां जगदुदयकरीं भावनामात्रगम्यां,
मूलं या सर्वधाम्नां स्फुरति निरुपमा हूङ्कृतोदञ्चितोरः।। १६।।

नीता सा शनकैरधोमुखसहस्रारारुणाब्जोदरे,
च्योतत्पूर्णशशाङ्कबिम्बमधुनः पीयूषधारास्रुतिम्।
रक्तां मन्त्रमयीं निपीय च सुधानिःष्यन्दरूपा विशेद्,
भूयोऽप्यात्मनिकेतनं पुनरपि प्रोत्थाय पीत्वा विशेत्।। १७।।

**योऽभ्यस्यत्यनुदिनमेवमात्मनोऽन्तर्बीजांशं दुरितजरापमृत्युरोगान्।**
**जित्वाऽसौ स्वयमिव मूर्तिमाननङ्गः, सञ्जीवेच्चिरमतिनीलकेशजालः।।१८।।**

(इति तद्रश्मिनिकरभस्मितसकलकल्मषजालो "मूलं" मनसा दशवार-मावर्तयेत्।)

## अजपाजपविधिः

अथ पूर्वेद्युः सूर्योदयादारभ्याद्यसूर्योदयपर्यन्तं षट्शताधिकैकविंशतिसाहस्त्रिकां निःश्वासोच्छ्वासरूपिणीमजपां मूलाधारादिब्रह्मरन्ध्रान्तसप्तचक्रनिवासिनीभ्यो देवताभ्यो निवेदयिष्ये, इति सङ्कल्प्य क्रमशो निवेदयेत्। यथा -

मूलाधारे चतुर्दलपद्मे वं शं षं सं चतुरक्षरे चतुष्कोणयन्त्रे ऐरावतवाहने लं बीजे स्थिताय सिद्धिबुद्धिसहिताय कुङ्कुमवर्णाय महागणपतये षट्शतमजपाजपं निवेदयामि।

स्वाधिष्ठाने षड्दलपद्मे बं भं मं यं रं लं षडक्षरे अर्धचन्द्रे यन्त्रे मकरवाहने वं बीजे स्थिताय सरस्वतीशक्तिसहिताय सिन्दूरवर्णाय ब्रह्मणे षट्सहस्रमजपाजपं निवेदयामि।

मणिपूरचक्रे दशदलपद्मे डं ढं णं तं थं दं धं नं पं फं दशाक्षरे त्रिकोणयन्त्रे मेषवाहने रं बीजे स्थिताय लक्ष्मीशक्तिसहिताय नीलवर्णाय विष्णवे षट्सहस्रमजपाजपं निवेदयामि।

अनाहतचक्रे द्वादशदलपद्मे कं खं गं घं ङं चं छं जं झं ञं टं ठं द्वादशाक्षरे षट्कोणयन्त्रे हरिणवाहने यं बीजे स्थिताय पार्वतीशक्तिसहिताय हेमवर्णाय परमशिवाय षट्सहस्रमजपाजपं निवेदयामि।

विशुद्धिचक्रे षोडशदलपद्मे अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः षोडशाक्षरे शून्ययन्त्रे हस्तिवाहने हं बीजे स्थिताय प्राणशक्तिसहिताय शुद्धस्फटिकसङ्काशाय जीवाय सहस्रमेकमजपाजपं निवेदयामि।

आज्ञाचक्रे द्विदलपद्मे श्वेतवर्णे हं क्षं द्व्यक्षरे लिङ्गयन्त्रे नरवाहने प्रणवबीजे स्थिताय ज्ञानशक्तिसहिताय विद्युद्वर्णाय गुरवे सहस्रमेकमजपाजपं निवेदयामि।

ब्रह्मरन्ध्रे सहस्रदलपद्मे चित्रवर्णे अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इति विंशतिवारोच्चारिते सहस्राक्षरे विसर्गयन्त्रे बिन्दुवाहने पूर्णचन्द्रमण्डले आनन्दमहासमुद्रमध्ये चिन्मयमणिद्वीपे चित्सार-चिन्तामणिमयमन्दिरे कल्पवृक्षाधस्तले अव्याकृतब्रह्ममहासिंहासने स्थिताय नानावर्णाय वर्णातीताय चिच्छक्तिसहिताय परमात्मने सहस्रमेकमजपाजपं निवेदयामि। (इति निवेदयेत्।)

(अथ कतिचित् क्षणान् 'हंसः सोऽहम्' इति श्वासोच्छ्वासेषु भावयेत्।)

**हकारेण बहिर्याति सकारेण विशेत् पुनः।**
**हंसोऽतिपरमं मन्त्रं जीवो जपति सर्वदा।।**

(इति ध्यात्वा मानसैरुपचारैः सर्वान् देवान् पूजयेत्।)

लं पृथिव्यात्मकं गन्धं समर्पयामि। (कनिष्ठिकाङ्गुष्ठाभ्याम्)।
हं आकाशात्मकं पुष्पं समर्पयामि। (अङ्गुष्ठतर्जनीभ्याम्)।
यं वाय्वात्मकं धूपमाघ्रापयामि। (तर्जन्यङ्गुष्ठाभ्याम्)।
रं वह्न्यात्मकं दीपं दर्शयामि। (अङ्गुष्ठमध्यमाभ्याम्)।
वं अमृतात्मकं नैवेद्यं निवेदयामि। (अङ्गुष्ठानामिकाभ्याम्)।
सं सर्वात्मकं ताम्बूलादिसर्वोपचारान् समर्पयामि। (साङ्गुष्ठाभिः सर्वाभिरङ्गुलीभिः)।

## श्रीचक्रदेवतान्तर्यागः

आमूलाधारादाब्रह्मविलं विलसन्त्यां बिसतन्तुतनीयस्यां विद्युत्पुञ्ज-पिञ्जरायां विवस्वदयुतप्रकाशायां कुण्डलिन्यामेव निम्नाङ्कितेषु चक्रेषु श्रीचक्रस्थितां देवतां भावयन् पूजयेत्। तद्यथा–

मूलाधारादधोगते अकुलसहस्रारे तदुपरि स्थिते विषुवन्नाम्नि रक्तवर्णे षड्दले च देहश्रीचक्रयोरभेदेन भूपुरस्थिता अणिमादिदेवीः पूजयामि।
मूलाधारे चतुर्दले षोडशदलगतकामाकर्षिण्यादिदेवीः पूजयामि।
स्वाधिष्ठाने षड्दलेऽष्टदलगतानङ्गकुसुमादिदेवीः पूजयामि।
मणिपूरे दशदले चतुर्दशारगतसर्वसङ्क्षोभिण्यादिदेवीः पूजयामि।
अनाहते द्वादशदले बहिर्दशारगतसर्वसिद्धिप्रदादिदेवीः पूजयामि।
विशुद्धौ षोडशदलेऽन्तर्दशारगतसर्वज्ञादिदेवीः पूजयामि।
लम्बिकाग्रे अष्टारगतवशिन्यादिदेवीः पूजयामि।
आज्ञायां द्विदले आयुधदेवीस्त्रिकोणगतमहाकामेश्वर्यादिदेवीश्च पूजयामि।
सहस्रारे बिन्दुगतश्रीललितामहात्रिपुरसुन्दरीं कामेश्वराङ्कनिलयां देवीं पूजयामि। इति।

(एवं श्रीमहात्रिपुरसुन्दर्यां सचक्रावयवान्यावरणानि विलीनानि विभाव्य मध्यत्र्यस्राग्रे स्थितजीवात्मना सहितां देवीं हृदयं नीत्वा स्वाञ्जलिकुसुमैस्तां सम्पूज्य ततोऽकुलेन्दुगलितामृतधारारूपिणीः चन्दनकुसुमधूपदीपनैवेद्यशालिकरकमलाः पीतासितश्यामरक्तशुक्लवर्णाः भूवियदनिलानलजललक्षणाः पञ्चभूतमयीः सर्वावयव-सुन्दरीः पञ्च देवता देव्यग्रे स्थिताः पञ्चोपचारमुद्राश्च प्रदर्शिता भावयेत्।

ततो देव्या नासायां गन्धदेवता, श्रोत्रे पुष्पदेवता, नाभौ धूपदेवता, नयने दीपदेवता, जिह्वायां नैवेद्यदेवता इति क्रमेण ता विलीना विभाव्य मूलविद्यामुच्चरन् जीवात्मानं देवीपादमूले लीनं विभाव्य हृदयगतदेवीरूपं मध्यत्र्यस्रसहितं तथैव केवलं ज्योतिर्मयतामापन्नं ध्यायन् सङ्क्षोभिण्यादिमुद्रा[1] भावयित्वा क्षणं न किञ्चिदपि चिन्तयेत्।)

## रश्मिमालामन्त्राः

ततो रश्मिमालाप्रवर्तनम्। रश्मिमालामन्त्रेषु वैदिकान् मन्त्रान् सस्वरान् पठेत्।

**ॐ भूर्भुवस्स्वः, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रयोदयात्** (इति गायत्री मूलाधारे)।। १।।

सावित्र्या विश्वामित्र ऋषिः निचृद्गायत्रीच्छन्दः सविता देवता, तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्-

**मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै -**
**र्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम्।**
**गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं**
**शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे।।१।।**

**यत इन्द्र भयामहे ततो नो अभयं कृधि।**
**मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि।।**
**स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी।**
**वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः।।२।।**
(इत्यैन्द्री विद्या सप्तषष्ट्यर्णा सङ्कटे भयनाशिनी, हृदये)।।

अभयङ्करमन्त्रस्य गृत्समद ऋषिः, त्रिष्टुप् छन्दः, अभयङ्करो देवता, तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्-

---

1. मुद्रास्तु पूजा-प्रकरणे द्रष्टव्याः।

**आरूढो वारणेन्द्रं दशशतनयनः श्यामलः कोमलाङ्गः**
**वर्मी वीरः प्रतापी प्रतिभटदहनप्रज्ज्वलच्चक्रपाणिः।**
**दोर्भिर्दिव्यायुधाढ्यैर्मणिगणखचितैर्देवमन्त्रीसनाथो**
**दत्वाभीष्टानि शश्वत्परिहृतदुरितः पातु विश्वं महेन्द्रः॥२॥**

**ॐ घृणिस्सूर्य आदित्योम्** (इत्यष्टार्णा सौरी तेजोदा, फाले)॥ ३॥

सौरमन्त्रस्य देवभाग ऋषिः, गायत्रीच्छन्दः, सूर्यो देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्–

**धृतपद्मद्वयं भानुं तेजोमण्डलमध्यगम्।**
**सर्वाधिव्याधिशमनं छायाश्लिष्टतनुं भजे॥३॥**

**ॐ** (इति प्रणवः केवलो ब्रह्मविद्या मुक्तिप्रदा, ब्रह्मरन्ध्रे) ॥ ४॥

प्रणवस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, परमात्मा देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्–

**ओंकारवाच्यमुच्चण्डचण्डांशुसदृशप्रभम्।**
**वासुदेवाभिधं ब्रह्म विश्वगर्भमुपास्महे॥४॥**

**ॐ परोरजसेऽसावदोम्** (इति नवार्णा तुरीया गायत्री स्वैक्यविमर्शिनी, द्वादशान्ते)॥ ५॥

तुरीयागायत्रीमन्त्रस्य विश्वामित्र ऋषिः, गायत्रीच्छन्दः, सविता देवता, तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्–

**देवीं तुरीयगायत्रीं तुर्यातीतपदाश्रयाम्।**
**परोरजःप्रकाशात्मचितिरूपामहं भजे॥५॥**

रश्मिपञ्चकमेतन्मूलाधारहृत्फालविधिबिलद्वादशान्तस्थानबीजतया विभावनीयम्। (द्वादशान्तस्थानन्तु ललाटस्योत्तरभागः)।

**ॐ सूर्याक्षितेजसे नमः। खेचराय नमः। असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्माऽमृतं गमय। उष्णो भगवान् शुचिरूपः। हंसो भगवान् शुचिरप्रतिरूपः।**

विश्वरूपं घृणिनं जातवेदसं हिरण्मयं ज्योतिरेकं तपन्तम्।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः।।

ॐ नमो भगवते सूर्यायाहोवाहिनि वाहिन्यहोवाहिनि वाहिनि स्वाहा।

वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाथमानाः।
अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान्।।

**पुण्डरीकाक्षाय नमः। पुष्करेक्षणाय नमः। अमलेक्षणाय नमः। कमलेक्षणाय नमः। विश्वरूपाय नमः। श्रीमहाविष्णवे नमः** (इति षोडशमन्त्रसमष्टिरूपिणी चक्षुष्मती विद्या दूरदृष्टिसिद्धिप्रदा मूलाधारे)।।६।।

चक्षुष्मतीमन्त्रस्य भार्गव ऋषिः, नानाच्छन्दांसि, चक्षुष्मती देवता तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्–

**चक्षुस्तेजोमयं पुष्पकन्दुकं बिभ्रतीं करैः।**
**रौप्यसिंहासनारूढां देवीं चक्षुष्मतीं भजे।।६।।**

**ॐ गन्धर्वराज विश्वावसो ममाभिलषितां कन्यां प्रयच्छ स्वाहा** (इत्युत्तमकन्याविवाहदायिनी हृदये)।। ७।।

विश्वावसुमन्त्रस्य सम्मोहन ऋषिः। गायत्रीछन्दः विश्वावसु देवता। तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्–

**रक्ताङ्गरागारुणभूषणाढ्यां वीणाधरं वीटिकयोल्लसन्तम्।**
**गन्धर्वकन्याजनगीयमानं विश्वावसुं सद्बृहतीं नमामि।।७।।**

**ॐ नमो रुद्राय पथिषदे स्वस्ति मां सम्पारय** (इति मार्गसङ्कटहारिणी विद्या, फाले)।। ८।।

पथिषद्रुद्रमन्त्रस्य वामदेवः ऋषिः पङ्क्तिच्छन्दः, पथिषद्रुद्रो देवता तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्–

**आत्तसज्जधनुर्बाणकरं वृषभसंस्थितम्।**
**अन्नपूर्णासमाश्लिष्टं पथिषद्रुद्रमाश्रये।। ८।।**

**ॐ तारे तुत्तारे तुरे स्वाहा** (इति जलापच्छमनी विद्या, ब्रह्मरन्ध्रे)।। ९।।

तारामन्त्रस्य मत्स्य ऋषिः, ताराम्बा देवता, तत्प्रीत्यर्थे जपे विनियोगः।

ध्यानम्- **नौकासिंहासनारूढां शाक्यदर्शनदेवताम्।**
**जलापच्छमनीं वन्दे तारां वारिदमेचकाम्।।९।।**

**अच्युताय नमः, अनन्ताय नमः, गोविन्दाय नमः**
(इति महाव्याधिनाशिनी नामत्रयी विद्या, द्वादशान्ते)।। १०।।

नामत्रयमन्त्रस्य काश्यपात्रिभरद्वाजा ऋषयः, अनुष्टुप् छन्दः, श्रीमहाविष्णुर्देवता, तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम् -

**समस्तदुस्तरव्याधिसंघध्वंसपटीयसे।**
**अच्युतानन्तगोविन्दनाम्ने धाम्ने नमो नमः।।१०।।**

(एतद्रश्मिपञ्चकं मूलधारादिपरिकरतया ज्ञेयम्)।

**ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा**
(इति महागणपतिविद्या प्रत्यूहशमनी, मूलाधारे) ।। ११।।

महागणपतिमन्त्रस्य गणक ऋषिः, निचृद्गायत्री छन्दः, श्रीमहागणपतिर्देवता, तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्-

**बीजापूरगदेक्षुकार्मुकरुजा चक्राब्जपाशोत्पल-**
**व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः।**
**ध्येयो वल्लभया सपद्मकरया श्लिष्टोज्ज्वलद्भूषया**
**विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश्वरोऽभीष्टदः।।११।।**

**ॐ नमः शिवायै, ॐ नमः शिवाय**
(इति द्वादशार्णा शिवतत्त्वविमर्शिनी विद्या, हृदये)।। १२।।

शिवशक्त्यात्मकपञ्चाक्षरमन्त्रस्य वामदेव ऋषिः, पङ्क्तिश्छन्दः, उमामहेश्वरो देवता, तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्-

**वामांसन्यस्तवामेतरकरकमलायास्तथा वामहस्त-**
**न्यस्तारक्तोत्पलायाःस्तनभरविलसद्वामहस्तः प्रियायाः।**

**सर्वाकल्पाभिरामः श्रितपरशुमृगेष्टः करैः काञ्चनाभः**
**ध्येयः पद्मासनस्थः स्मरललितवपुः सम्पदे पार्वतीशः।।१२।।**

**ॐ जुं सः मां पालय पालय** (इति दशार्णा मृत्योरपि मृत्युरेषा विद्या, फाले)।। १३।।

अमृतमृत्युञ्जयस्य कहोल ऋषिः, विराट्छन्दः अमृतमृत्युञ्जयसदाशिवो देवता तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम् –

**स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा-**
**स्रवदमृतरसार्द्रं चन्द्रवह्न्यर्कनेत्रम्।**
**स्वकरलसितमुद्रापाशवेदाक्षमालं**
**स्फटिकरजतमुक्तागौरमीशं नमामि।।१३।।**

**ॐ नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ॐ** (इति श्रुतधारिणी विद्या ब्रह्मरन्ध्रे)।।१४।।

श्रुतधारिणीमन्त्रस्य भार्गव ऋषिः, अनुष्टुप् छन्दः, ब्रह्मा देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्–

**चतुराननमम्भोजनिषण्णं भारतीसखम्।**
**अक्षमालावराभीतिकमण्डलुधरं भजे।।१४।।**

**अं आं...अः कं खं...ळं क्षं** (इति सबिन्दुरंकारादिक्षकारान्तवर्णमालिका-मातृका सर्वज्ञताकरी द्वादशान्ते)।। १५।।

मातृकामन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः, मातृकासरस्वती देवता तत्प्रीत्यर्थे जपे विनियोगः। ध्यानम्–

**पञ्चाशता मातृकया ह्यारब्धाखिलदेहया।**
**समस्तविद्यारूपिण्या धन्योऽहं मातृकाम्बया।।१५।।**

(पञ्चेमाः रश्मयो मूलादिरक्षात्मकतया द्रष्टव्याः)।

**हसकलह्रीं हसकहलह्रीं सकलह्रीं** (इति लोपामुद्राविद्या स्वस्वरूपविमर्शिनी, मूलाधारे)।। १६।।

श्रीहादिलोपामुद्रामन्त्रस्य दक्षिणामूर्त्तिः ऋषिः, पङ्क्तिच्छन्दः, श्रीमहात्रिपुरसुन्दरी देवता, ह ५ बीजम्, ह ६ शक्तिः स ४ कीलकम्, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। बालया षडङ्गम्। ध्यानम्–

**श्रीदेवीभूषितोत्सङ्गं सान्द्रसिन्दूररोचिषम्।**
**हकारादिमनोर्वाच्यं वन्दे कामेश्वरं हरम्।।१६।।**

**क्लीं हैं ह्सौः स्हौः हैं क्लीं** (इति षट्कूटा सम्पत्करी विद्या हृदये)।। १७।।

सम्पत्करीमन्त्रस्य कण्व ऋषिः, गायत्रीच्छन्दः, सम्पत्सरस्वती देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् –

**अनेककोटिमातङ्गतुरङ्गरथपत्तिभिः ।**
**सेवितामरुणाकारां वन्दे सम्पत्सरस्वतीम्।।१७।।**

**सं सृष्टिनित्ये स्वाहा, हं स्थितिपूर्णे नमः, रं महासंहारिणि कृशे चण्डकालि फट्, रं ह्स्ख्फ्रें महानाख्ये अनन्तभास्करि महाचण्डकालि फट्, रं महासंहारिणि कृशे चण्डकालि फट्, हं स्थितिपूर्णे नमः, सं सृष्टिनित्ये स्वाहा, ह्स्ख्फ्रें महाचण्डयोगेश्वरि** (इति विद्यापञ्चकरूपिणी कालसङ्कर्षणी परमायुःप्रदा, फाले) ।। १८।।

चण्डयोगेश्वरीमन्त्रस्य ईश्वर ऋषिः, नानाच्छन्दांसि, चण्डयोगीश्वरी देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् –

**सृष्टिस्थितिभ्यां संहृत्यनाख्यया भासया श्रिताम्।**
**कूलङ्कषकपालाढ्यां चण्डयोगीश्वरीं भजे।।१८।।**

**ऐं ह्रीं श्रीं ह्स्ख्फ्रें ह्सौः अहमहं अहमहं ह्सौः ह्स्ख्फ्रें श्रीं ह्रीं ऐं**
(इति शुद्धज्ञानदा शाम्भवी विद्या ब्रह्मरन्ध्रे) ।।१९।।

परशम्भुनाथमन्त्रस्य वामदेव ऋषिः, पङ्क्तिच्छन्दः, परशम्भुनाथो देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् –

**पूर्णाहन्तास्वरूपाय तस्मै परमशम्भवे।**
**आनन्दताण्डवोद्दण्डपण्डिताय नमो नमः॥१९॥**

**सौः** (इयं परा विद्या द्वादशान्ते) ॥ २०॥

परामन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, परासरस्वती देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्-

**अकलङ्कशशाङ्काभा त्र्यक्षा चन्द्रकलावती।**
**मुद्रापुस्तलसद्बाहा पातु मां परमा कला॥२०॥**

(एताः पञ्च रश्मयो मूलाद्यधिष्ठानतया कलनीयाः)।

**ऐं क्लीं सौः, सौः क्लीं ऐं, ऐं क्लीं सौः** (इति नवाक्षरी श्रीदेव्यङ्गभूता बाला)॥२१॥

बालामन्त्रस्य दक्षिणामूर्तिर्ऋषिः, गायत्रीच्छन्दः बालात्रिपुरसुन्दरी देवता। तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्-

**अरुणकिरणजालैरञ्जिता सावकाशा**
**विधृतजपवटीका पुस्तकाभीतिहस्ता।**
**इतरकरवराढ्या फुल्लकह्लारसंस्था**
**निवसतु हृदि बाला नित्यकल्याणशीला॥२१॥**

**श्रीं ह्रीं क्लीं ॐ नमो भगवति अन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा** (इति श्रीदेव्या उपाङ्गभूता अन्नपूर्णा)॥ २२॥

अन्नपूर्णेश्वरीमन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, अन्नपूर्णेश्वरी देवता तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्-

**आदाय दक्षिणकरेण सुवर्णदर्वीं**
**दुग्धान्नपूर्णमितरेण च रत्नपात्रम्।**
**अन्नप्रदाननिरतां नवहेमवर्णाम्**
**अम्बां भजे कनकभूषणमाल्यशोभाम्॥२२॥**

**ॐ आं ह्री क्रों एहि परमश्वरि स्वाहा** (इयं श्रीदेवीप्रत्यङ्गभूता अश्वारूढा)।।२३।।

(अश्वारूढामन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, अश्वारूढा देवता तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्-

**बद्ध्वा पाशेनाङ्कुशेन कृष्यमाणां स्वसाध्यकम्।**
**घ्नन्तीं वेत्रेण फालस्रक्पाणिमश्वासनां भजे।।२३।।**

ध्यानान्तरम्-

**अश्वारूढा कराग्रे नवकनकमयीं वेत्रयष्टिं दधाना**
**दक्षेऽन्ये धारयन्ती स्फुरितधनुलतापाशहस्ता सुसाध्या।।**
**देवी नित्यप्रसन्ना शशिशकललसत्केशपाशा त्रिनेत्रा**
**दद्यादद्यानवद्यां श्रियमखिलसुखप्राप्तिहृद्यां श्रियै नः।।२३।।**

(श्रीविद्यागुरुपादुकामन्त्रस्तु-आह्निकप्रकरण एवोक्त इह पठितव्यः)। तद्यथा-

**ऐ ह्रीं श्रीं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः अमुकानन्दनाथश्रीगुरुपादुकां पूजयामि नमः।। २४।।**

श्रीविद्यागुरुपादुकामन्त्रस्य दक्षिणामूर्तिः ऋषिः, पङ्क्तिच्छन्दः, श्रीविद्यागुरुपादुका देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् -

**तेजोमयमहाविद्यां शेखराश्रितमस्तकाम्।**
**रक्तां चतुर्भुजां वन्दे श्रीविद्यागुरुपादुकाम्।।२४।।**

(अथ मूलविद्या-सा च गुरुमुखादवगता कादिनाम्नी)-

**कएईलह्रीं हसकहलह्रीं सकलह्रीं।।२५।।**

(बाला अन्नपूर्णा अश्वारूढा श्रीपादुका चेत्येताभिश्चतसृभिर्युक्ता मूलविद्या साम्राज्ञी मूलाधारे विलोकनीया)।।

(ऋषिच्छन्दोदेवतादिकं गुरुपरम्परातः प्राप्तमवगन्तव्यम्।)

**ऐं नमः उच्छिष्टचण्डालि मातङ्गि सर्ववशङ्करि स्वाहा**

(इति श्यामाङ्गभूता लघुश्यामा) ।।२६।।

लघुश्यामामन्त्रस्य मतङ्ग ऋषिः विराट्छन्दः, श्रीलघुश्यामाम्बा देवता तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् -

स्मरेत् प्रथमपुष्पिणीं रुधिरबिन्दुशोणाम्बरां
गृहीतमधुपात्रिकां मदविघूर्णनेत्राञ्चलाम्।
घनस्तनभरालसां गलितचूलिकां श्यामलां
करस्फुरितवल्लकीविमलशङ्खताटङ्किनीम्॥
माणिक्यवीणामुपलालयन्तीं
मदालसां मञ्जुलवाग्विलासाम्।
माहेन्द्रनीलद्युतिकोमलाङ्गीं
मातङ्गकन्यां मनसा स्मरामि॥२६॥ (इति वा)॥

**ऐं क्लीं सौः वद वद वाग्वादिनि स्वाहा।**

(इयं श्यामाङ्गभूता वाग्वादिनी)॥ २७॥

वागीश्वरीमन्त्रस्य कण्व ऋषिः, विराट्छन्दः, वागीश्वरी देवता तत्प्रसादसिद्ध्यर्थे जपे विनियोगः ध्यानम्-

अमलकमलसंस्था लेखनीपुस्तकोद्यत्-
करयुगलसरोजा कुन्दमन्दारगौरा।
धृतशशधरखण्डोल्लासिकोटीरपीठा
भवतु भवभयानां भङ्गिनी भारती नः॥२७॥

**ओष्ठपिधाना नकुली दन्तैः परिवृता पविः।**
**सर्वस्य वाच ईशाना चारु मामिह वादयेत्॥**

(इयं श्यामाप्रत्यङ्गभूता नकुलीविद्या) ॥ २८॥

नकुलीवागीश्वरीमन्त्रस्य कहोल ऋषिः, गायत्रीच्छन्दः, नकुलीवागीश्वरी देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् -

नकुली वज्रदन्ताली साध्यजिह्वाहिदंशिनी।
भक्तवक्तृत्वजननी भावनीया सरस्वती॥

श्रीविद्यागुरुपादुकैव प्रथमबीजत्रयस्थाने बालासहिता श्यामागुरुपादुका भवति। यथा-

**ऐं क्लीं सौः ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः अमुकानन्दनाथश्रीगुरुपादुकां पूजयामि नमः।। २९।।**

श्यामागुरुपादुकामन्त्रस्य मतङ्ग ऋषिः, पङ्क्तिच्छन्दः, श्यामागुरुपादुका देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्

**वन्दे गुर्वङ्घ्रिमुकुटां श्यामलां शुकपाणिनीम्।**
**समस्तसिद्धिजननीं श्यामलागुरुपादुकाम्।।२९।।**

**ऐं ह्रीं श्रीं ऐ क्लीं सौः ॐ नमो भगवति श्रीमातङ्गीश्वरि सर्वजनमनोहारि सर्वमुखरञ्जिनि, क्लीं ह्रीं श्रीं सर्वराजवशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगव-शङ्करि सर्वसत्त्वशङ्करि सर्वलोकवशङ्करि (त्रैलोक्यं) अमुकं मे वशमानय स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं** (इत्यष्टनवतिवर्णा राजश्यामला पूर्वोक्ताभिरङ्गोपाङ्ग-पादुकेत्येताभिश्च चतसृभिर्विद्याभिस्सहिता हृच्चक्रे यष्टव्या)।।३०।। (ऋष्यादिकं गुरुपरम्परातोऽवगन्तव्यम्)

**लूं वाराहि लूं उन्मत्तभैरवि पादुकाभ्यां नमः।**

(इयं वार्ताल्यङ्गभूता लघुवार्ताली) ।। ३१।।

लघुवाराहीमन्त्रस्य नारद ऋषिः, पङ्क्तिश्छन्दः, लघुवाराही देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् -

**महार्णवे निपतितामुद्धरन्तीं वसुन्धराम्।**
**महादंष्ट्रां महाकायां नमाम्युन्मत्तभैरवीम्।।३१।।**

**ॐ ह्रीं नमो वाराहि घोरे स्वप्नं ठः ठः स्वाहा**

(इयं स्वप्ने शुभाशुभवक्त्री वार्ताल्या उपाङ्गभूता स्वप्नवाराही)।।३२।।

स्वप्नवाराहीमन्त्रस्य अग्निर्ऋषिः, गायत्रीच्छन्दः, स्वप्नवाराही देवता। तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम् -

स्वप्ने शुभाशुभं भावि शासन्तीं भक्तकार्ययोः।
दुःस्वप्नहारिणीं वन्दे वाराहीं स्वप्ननायिकाम्।।

ॐ नमो भगवति तिरस्करिणि महामाये महानिद्रे सकल-पशुजनमनश्चक्षुःश्रोत्रतिरस्करणं कुरु कुरु स्वाहा।। ३३।।

(तिरस्करिणीमन्त्रस्य ब्रह्मा ऋषिः, गायत्रीच्छन्दः, तिरस्करिणी देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्-

मुक्तकेशीं विवसनां सर्वाभरणभूषिताम्।
स्वयोनिदर्शनान्मुह्यत्पशुवर्गां नमाम्यहम्।।३३।।

ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः। (एषा वार्ताली-गुरुपादुका)।। ३४।।

वाराहीगुरुपादुकामन्त्रस्य ब्रह्मा ऋषिः गायत्रीच्छन्दः, वाराहीगुरुपादुका देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्-

देशिकाङ्घ्रिलसन्मौलिं खड्गिनीञ्च कपालिनीम्।
भावयामि घनच्छायां पञ्चमीगुरुपादुकाम्।। ३४।।

ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः। रुन्धे रुन्धिनि नमः। जम्भे जम्भिनि नमः। मोहे मोहिनि नमः। स्तम्भे स्तम्भनि नमः। सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु करु शीघ्रं वश्यं ऐं ग्लौं ठः ठः ठः ठः हुं अस्त्राय फट्

(इति द्वादशोत्तरशताक्षरो महावाराहीमन्त्रः)।। ३५।।

(पूर्वोक्ताभिश्चतसृभिर्युक्तेयं महावाराही आज्ञाचक्रे परिपूज्या।)

प्रथमद्वितीयकूटयोः हृल्लेखावर्जं पञ्चदश्येव त्रयोदशाक्षरी श्रीपूर्तिविद्या ब्रह्मरन्ध्रे यष्टव्या। तद्यथा-

कएईल हसकहल सकलह्रीं (इयं कादिपूर्तिविद्या) हसकल हसकहल सकलह्रीं (इयं हादिपूर्तिविद्या)।।३६।।

श्रीपूर्तिविद्यामन्त्रस्य दक्षिणामूर्तिर्ऋषिः, पङ्क्तिश्छन्दः, श्रीपूर्तिविद्या देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः।

प्रथमत्रिकस्थाने त्रितारी कुमारी वाक् ग्लौं इत्यष्टबीजपूर्वा श्रीगुरुपादुकैव महापादुका सर्वमन्त्रसमष्टिरूपिणी स्वैक्यविमर्शिनी महासिद्धिप्रदायिनी द्वादशान्ते वरिवस्या।। यथा–

**ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः अमुकानन्दनाथश्रीगुरुपादुकां पूजयामि नमः।। ३७।।**

महापादुकामन्त्रस्य दक्षिणामूर्तिर्ऋषिः, पङ्क्तिच्छन्दः, श्रीमहापादुका देवता, तत्प्रसादसिद्ध्यर्थे जपे विनियोगः। ध्यानम्–

**सर्वविद्यामयीं सर्वशक्तिपीठस्वरूपिणीम्।**
**कराग्रे हृदये मूले देशिकाङ्घ्रियुगत्रयम्।।**
**दधतीं दीप्तभूषाढ्यां श्रीमहापादुकां नमः।।३७।।**

*इति ऋष्यादिसहितरश्मिमाला।*

रश्मिमालामन्त्रा आहत्य सप्तत्रिंशतिः। एते ब्राह्मे मुहूर्ते सकृदावर्तनीयाः सर्व एवेमे मन्त्राः श्रीगुरुमुखादवगत्यैव पठिताः महते श्रेयसे, नान्यथेति शिवशासनम्।

पुस्तके लिखितान् मन्त्रानवलोक्य जपेत्तु यः।
स जीवन्नेव चाण्डालो मृतः श्वा चाभिजायते।।

इति सांख्यायनतन्त्रवचनेन गुरुमुखागमं विना जपस्य निषेधात्।।

## प्रातःस्मरणम्

अहं देवी न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक्।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ।।
त्वमेवाहमहं त्वञ्च संविन्मात्रं वपुस्तव।
आवयोरन्तरं देवि! नश्यत्वाज्ञाबलात् तव।।
अहं तीर्णो भवं घोरं कृत्यं किञ्चिन्न चास्ति मे।
तथापि देहि मे मातराज्ञां तव सुसेवने ।।
कृत्वा समाधिस्थितया धिया ते, चिन्तां नवाधारनिवासभूताम्।
प्रातः समुत्थाय तव प्रियार्थं, संसारयात्रामनुवर्तयिष्ये ।।

संसारयात्रामनुवर्तमानं तवाज्ञया श्रीत्रिपुरेश्वरेशि ! ।
स्पर्धा–तिरस्कार–कलि–प्रमाद–भयानि मां माऽभिभवन्तु मातः।।
जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ।
त्वया हृषीकेशि! हृदिस्थयाऽहं, यथा नियुक्तोऽस्मि तथा करोमि।।

प्रातः प्रभृति–सायान्तं सायादि–प्रातरन्ततः।
यत्करोमि जगद्योने ! तदस्तु तव पूजनम् ।।
मञ्जुसिञ्जितमञ्जीरं वाममर्धं महेशितुः।
आश्रयामि जगन्मूलं यन्मूलं सचराचरम्।।

## श्रीललितापञ्चकम्

प्रातः स्मरामि ललितावदनारविन्दं,
बिम्बाधरं पृथुलमौक्तिकशोभिनासम्।
आकर्णदीर्घनयनं मणिकुण्डलाढ्यं,
मन्दस्मितं मृगमदोज्ज्वलभालदेशम् ।। १।।
प्रातर्भजामि ललिताभुजकल्पवल्लीं,
रक्ताङ्गुलीयलसदङ्गुलिपल्लवाढ्याम् ।
माणिक्यहेमवलयाङ्गदशोभमानां,
पुण्ड्रेक्षुचापकुसुमेषुसृणीर्दधानाम् ।। २।।
प्रातर्नमामि ललिताचरणारविन्दं,
भक्तेष्टदाननिरतं भवसिन्धुपोतम्।
पद्मासनादि–सुरनायकपूजनीयं,
पद्माङ्कुशध्वजसुदर्शनलाञ्छनाढ्यम् ।। ३।।
प्रातःस्तुवे परशिवां ललितां भवानीं,
त्रय्यन्तवेद्यविभवां करुणानवद्याम् ।
विश्वस्य सृष्टिविलयस्थितिहेतुभूतां,
विद्येश्वरीं निगमवाङ्मनसाऽतिदूराम् ।। ४।।
प्रातर्वदामि ललिते तव पुण्यनाम,
कामेश्वरीति कमलेति महेश्वरीति।
श्रीशाम्भवीति जगतां जननी परेति,
वाग्देवतेति वचसा त्रिपुरेश्वरीति ।। ५।।
यः श्लोकपञ्चकमिदं ललिताम्बिकायाः
सौभाग्यदं सुललितं पठति प्रभाते।

तस्मै ददाति ललिता झटिति प्रसन्ना,
विद्यां श्रियं विपुलसौख्यमनन्तकीर्तिम्।। ६।।

## भूप्रार्थना

समुद्रवसने देवि, पर्वतस्तनमण्डिते।
विष्णुपत्नि नमस्तुभ्यं पादचारं क्षमस्व मे।।

(इति भूमिं सम्प्रार्थ्य धरणीतलन्यस्तवहन्नाडीपार्श्वपादमुत्थाय ग्रामाद्–बहिः स्मार्तेन विधिना शौचक्रमं निर्वर्तेत।)

## दन्तधावनादिविधिः

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च।
**ब्रह्म प्रज्ञाश्च मेधाश्च त्वं नो देहि वनस्पते।।**

इति मन्त्रेण दन्तधावनकाष्ठमभिमन्त्र्य **ऐं ह्रीं श्रीं, क्लीं कामदेवाय सर्वजनप्रियाय नमः** इति मन्त्रेण दन्तधावनं, **ऐं ह्रीं श्रीं, ह्रीं** इति जिह्वोल्लेखनं च विधाय कफविमोचननासाशोधनदूषिकानिरसनपूर्वकं विहितविंशतिगण्डूषः **ऐं ह्रीं श्रीं श्रीं, ऐं ह्रीं श्रीं ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः, ऐं ह्रीं श्रीं, श्रीं ह्रीं क्लीं, ऐं ह्रीं श्रीं श्रीं सहकलह्रीं श्रीं,** इति मन्त्रचतुष्टयेन मुखं प्रक्षाल्य, यथा स्मृत्याचामेत्।

## स्नानविधिः

(ततो नद्यादौ वैदिकस्नानोत्तरं 'श्रीललिताप्रीत्यर्थं तान्त्रिकस्नानं करिष्ये' इति सङ्कल्प्य जले पुरतो हस्तमात्रं चतुरस्रमण्डलं परिगृह्य, तत्र)

**ब्रह्माण्डोदरतीर्थानि, करैः स्पृष्टानि ते रवे।**
**तेन सत्येन मे देव, तीर्थं देहि दिवाकर।।**

इति सूर्यमभ्यर्थ्य–

आवाहयामि त्वां देवि स्नानार्थमिह सुन्दरि।
एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते।।

इति गङ्गामर्थयित्वा 'ऐं ह्रीं श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः 'क्रों' इत्युङ्कुशमुद्रया सूर्यमण्डलं भित्त्वा ततो गङ्गादिसर्वतीर्थावाहनोत्तरं 'वं' इति सलिलबीजेन सप्तवारमभिमन्त्र्य मुहुर्मूलमावर्त्तयन् मूर्धनि त्रीनुदकाञ्जलीन् दत्त्वा त्रींश्च पीत्वा

मूलमन्त्रपूर्वं 'श्रीललितां तर्पयामि' इति त्रिस्तर्पणं, मूलेन त्रिः प्रोक्षणञ्चात्मनो योनिमुद्रया विदध्यात्। (गृहे तु विना तर्पणम्। अशक्तौ च स्मार्तेन पथा मन्त्रभस्मनोरन्यतर-न्निर्वर्त्य मूलेन त्रिराचमन-प्रोक्षणे केवलं कुर्यात्।)

## सन्ध्याविधिः

(अथ धौते वाससी परिधाय विधृतपुण्ड्रो वैदिकीं सन्ध्यामभिवन्द्य तान्त्रिकीमाचरेत्)। यथा-मूलेन त्रिराचम्य, द्विः परिमृज्य, सकृदुपस्पृश्य चक्षुषी नासिके श्रोत्रे अंसौ नाभि हृदयं शिरश्चाभिमृशेत्। एवं त्रिराचम्य, पूर्ववत् प्राणानायम्य मूलमन्त्राभिमन्त्रितेन जलेन त्रिरात्मानञ्च प्रोक्ष्य अञ्जलिना सलिलमादाय **ऐं ह्रीं श्रीं ह्रां ह्रीं ह्रूं सः मार्तण्डभैरवाय प्रकाशशक्तिसहिताय स्वाहा** इति मन्त्रेण उदयते विवस्वते त्रिरर्घ्यं दत्त्वा तन्मण्डले श्रीचक्रमनुचिन्त्य, तत्र ध्यायेत्-

**ध्यायेत् कामेश्वराङ्कस्थां कुरुविन्दमणिप्रभाम्।**
**शोणाम्बरस्रगालेपां सर्वाङ्गीणविभूषणाम्।।**
**सौन्दर्यशेवधिं सेषुचापपाशाङ्कुशोज्ज्वलाम्।**
**स्वभाभिरणिमाद्याभिः सेव्यां सर्वनियामिकाम्।।**
**सच्चिदानन्दवपुषं सदयापाङ्गविभ्रमाम्।**
**सर्वलोकैकजननीं स्मेरास्यां ललिताम्बिकाम्।।**

(अत्रायुधानां, क्रमः स्वरूपञ्च सपर्याप्रकरणे वक्ष्यते।)

ततः- **ऐं ह्रीं श्रीं क ए ई ल ह्रीं त्रिपुरसुन्दरि विद्महे**
**ऐं ह्रीं श्रीं ह स क ह ल ह्रीं पीठकामिनि धीमहि**
**ऐं ह्रीं श्रीं सकलह्रीं तन्नः क्लिन्ने प्रचोदयात्।**

(इति मन्त्रेण महेश्यै त्रिरर्घ्यं दत्त्वा, मूलेन त्रिः सन्तर्प्य मूलेन पूर्ववदाचम्य जपप्रकरणे वक्ष्यमाणान् ऋष्यादीन् न्यस्य मूलमष्टोत्तरशतवारमावर्तयेत्। ततः पुनः कराङ्गन्यासादिकं कृत्वा जपं वक्ष्यमाणमन्त्रेण श्रीदेव्यै समर्प्याचम्य मण्डलस्थतीर्थं विसर्जनमुद्रया सूर्ये विसृजेत्। (इयमेकैव प्रातः सन्ध्यानुष्ठेया सूत्रकारमते)। अथ सपर्यासाधनानि सम्पाद्य ब्रह्मयज्ञादि निर्वर्तयेदिति शिवम्।

*षोडशानन्दनाथ (श्रीकरपात्रस्वामि) सङ्कलिते श्रीविद्यारत्नाकरे श्रीक्रमे*
*प्रथममाह्निकप्रकरणं सम्पूर्णम्*

# श्रीक्रमे नित्यसपर्याप्रकरणम्

ॐ श्रीगुरुभ्यो नमः।
ॐ श्रीमहागणपतये नमः।
ॐ श्रीललितामहात्रिपुरसुन्दर्यै नमः।

## ब्रह्मविद्यासम्प्रदायगुरुस्तोत्रम्

आब्रह्मलोकादशेषादालोकालोकपर्वतात् ।
ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमाम्यहम्।।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः सर्वोपप्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्माहमस्मि, सोऽहमस्मि, ब्रह्माहमस्मि।

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं,
सिद्धौघं बटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।
वीरान् द्व्यष्ट चतुष्कषष्टिनवकं वीरावलीपञ्चकं,
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्।।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः।।

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ।।

नारायणं पद्मभुवं वसिष्ठं, शक्तिं च तत्पुत्रपराशरं च।
व्यासं शुकं गौडपदं महान्तं, गोविन्दयोगीन्द्रमथास्य शिष्यम्।
श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम्।
तं तोटकं वार्तिककारमन्यानस्मद्गुरून् सन्ततमानतोऽस्मि।।

## यागमन्दिर–प्रवेशः

(द्वार–देवता–पूजनम्)

ऐं ह्रीं श्रीं भं भद्रकाल्यै नमः। (द्वारस्य दक्षशाखायाम्)
३ भं भैरवाय नमः। (द्वारस्य वामशाखायाम्)
३ लं लम्बोदराय नमः। (द्वारस्य ऊर्ध्वशाखायाम्)
३ द्वारश्रियै नमः, देहल्यै नमः।
इति सम्पूज्य।

## तत्त्वाचमनम्

ऐं ह्रीं श्रीं ऐं कएईलह्रीं आत्मतत्त्वं शोधयामि स्वाहा।
३ क्लीं हसकहलह्रीं विद्यातत्त्वं शोधयामि स्वाहा।
३ सौः सकलह्रीं शिवतत्त्वं शोधयामि स्वाहा।
३ ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं सर्वतत्त्वं शोधयामि स्वाहा। (इत्याचामेत्)।

## गुरुपादुकामन्त्रः

ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः हंसः शिवः सोऽहं स्वरूपनिरूपणहेतवे श्रीगुरवे नमः, अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः सोऽहं हंसः शिवः ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः सोऽहं हंसः शिवः स्वच्छप्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः, अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः हंसः शिवः सोऽहं हंसः ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः हंसः शिवः सोऽहं हंसः स्वात्मारामपञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः, अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।

(इति मृगीमुद्रया गुरुपादुकामुच्चार्य, सुमुख–सुवृत्त–चतुरस्र–मुद्गर–योन्याख्याभिः पञ्चमुद्राभिः श्रीगुरून् वामभुजे प्रणम्य, गणपतिमूलेन स्वदक्षभुजे योनिमुद्रया महागणपतिं प्रणमेत्।)

## घण्टापूजा

हे घण्टे सुस्वरे पीठे, घण्टाध्वनिविभूषिते।
वादयन्ति परानन्दे, घण्टादेवं प्रपूजयेत्।।

**आगमार्थं च देवानां, गमनार्थं तु रक्षसाम्।**
**कुर्याद् घण्टारवं तत्र, देवताह्वानलाञ्छनम्।।**
(इति घण्टां प्रपूज्य घण्टानादं कृत्वा)

**सङ्कल्पः**

**शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम्।**
**प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।।**

मूलेन प्राणानायम्य देश-कालौ सङ्कीर्त्य

मम श्रीललितामहात्रिपुरसुन्दरीप्रीत्यर्थं यथासम्भवद्रव्यैः यथाशक्ति सपर्याक्रमं निर्वर्तयिष्ये, तेन परमेश्वरं प्रीणयामि। (इति सङ्कल्पयेत्)

(तत आत्मानम् अलङ्कृत्य ताम्बूलेन सुरभिलवदनः सन् प्रमुदितचित्तः 'शिवोऽहम्' इति भावयेत्)

**पुष्पशोधनम्**

ॐ पुष्पकेतुराजार्हते शताय सम्यक् सम्बन्धाय ॐ पुष्पे पुष्पे महापुष्पे सुपुष्पे पुष्पभूषिते पुष्पचयावकीर्णे हुं फट् स्वाहा।

(इति मन्त्राभिमन्त्रितजलेन पुष्पाणि सम्प्रोक्षयेत्)।

**आसनशुद्धिः**

(आसनमास्तीर्य दक्षिणहस्ते जलमादाय 'सौः' इति द्वादशवारमभिमन्त्र्य तज्जलेन मूलमन्त्रेण आसनं प्रोक्षयेत्)।

अस्य श्रीआसनमहामन्त्रस्य पृथिव्याः मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता, आसने विनियोगः।

**पृथ्वि त्वया धृता लोका, देवि त्वं विष्णुना धृता।**
**त्वं च धारय मां देवि, पवित्रं कुरु चासनम्।।** (इति प्रोक्ष्य)

३ योगासनाय नमः, वीरासनाय नमः, शरासनाय नमः,
(आसनाधः मायाबीजं विलिख्य।)

ॐ ऐं ह्रीं श्रीं ॐ ह्रीं आधारशक्तिकमलासनाय नमः।।

(इति पुष्पाक्षतैः आसनमभ्यर्च्य आसने उपविशेत्)।[1]

३ रक्तद्वादशशक्तियुक्ताय द्वीपनाथाय नमः।

(इति भूमौ पुष्पाञ्जलिं विकिरेत्)।

---

1. यदाशाभिमुखो मन्त्री त्रिपुरां परिपूजयेत्।
देवी पश्चात्तदा प्राची प्रतीची त्रिपुरां पुरः।। (*कुलार्णवे*)

## देहरक्षा

३ श्रीमहात्रिपुरसुन्दरि आत्मानं रक्ष रक्ष।

(इति देहे त्रिः व्यापकं कृत्वा)।

३ गुं गुरुभ्यो नमः। (दक्षबाहौ)

३ गं गणपतये नमः। (वामबाहौ)

३ दुं दुर्गायै नमः। (दक्षोरौ)

३ वं वटुकाय नमः। (वामोरौ)

३ यां योगिनीभ्यो नमः। (पादयोः)

३ क्षं क्षेत्रपालाय नमः। (नाभौ)

३ पं परमात्मने नमः। (हृदये) इति प्रणम्य,

३ ॐ ऐं नमो भगवति तिरस्करिणि महामाये महानिद्रे सकलपशुजनमनश्चक्षुःश्रोत्रतिरस्करणं कुरु कुरु हुं फट् स्वाहा।

३ हसन्ति हसितालापे मातङ्गि परिचारिके मम भयविघ्नापदां नाशं कुरु कुरु ठः ठः ठः हुं फट् स्वाहा।

३ ॐ नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र र ज्वालामालिनि हुं फट् स्वाहा।

(इति परितो वह्निप्राकारं विभाव्य)

'भूर्भुवस्स्वरोम्' (इति छोटिकया दिग्बन्धः)।

**परमामृतवर्षेण प्लावयन्तं चराचरम्।**
**सञ्चिन्त्य परमाद्वैतभावनाऽमृतसेवया।।**
**मोदमानो विस्मृतान्यविकल्पविभवभ्रमः।**
**चिदम्बुधिमहाभङ्गच्छिन्नसङ्कोचसङ्कटः ।।**

इति मूलाधारात् कुण्डलीमुत्थाप्य ब्रह्मरन्ध्रं नीत्वा ततो गलितेनामृतेन स्वदेहं प्लावितं भावयेत्।

३ समस्तप्रकट-गुप्त-गुप्ततर-सम्प्रदाय-कुलोत्तीर्ण-निगर्भ-रहस्याति-रहस्यपरापरातिरहस्य-योगिनीदेवताभ्यो नमः।

(इति समष्टिमन्त्रेण यन्त्रे पुष्पाञ्जलिं दत्त्वा)

३ ऐं ह्रः अस्त्राय फट् (इति अस्त्रमन्त्रेण मुहरावृत्तेन अङ्गुष्ठादिकनिष्ठि-कान्तं करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात्)।

३ श्रीगुरो दक्षिणामूर्ते, भक्तानुग्रहकारक ।
अनुज्ञां देहि भगवन्, श्रीचक्रयजनाय मे।।
३ अतिक्रूर महाकाय कल्पान्तदहनोपम।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ।।

## श्रीयन्त्रस्य लघुप्राणप्रतिष्ठा[1]

३ आं ह्रीं क्रों यं रं लं वं शं षं सं हं ॐ हंसः सोऽहं, हंसः शिवः श्रीचक्रस्य प्राणा इह प्राणाः।।

३ आं ह्रीं क्रों श्रीचक्रस्य जीव इह स्थितः। सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणा इहैवागत्य अस्मिन् चक्रे सुखं चिरं तिष्ठन्तु स्वाहा।

३ **ॐ असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्। ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळया नस्स्वस्ति।।**

## मन्दिरपूजा

ऐं ह्रीं श्रीं अमृताम्भोनिधये नमः
३ रत्नद्वीपाय नमः
३ नानावृक्षमहोद्यानाय नमः
३ कल्पवाटिकायै नमः
३ सन्तानवाटिकायै नमः
३ हरिचन्दनवाटिकायै नमः
३ मन्दारवाटिकायै नमः
३ पारिजातवाटिकायै नमः
३ कदम्बवाटिकायै नमः
३ पुष्परागरत्नप्राकाराय नमः
३ पद्मरागरत्नप्राकाराय नमः
३ गोमेदकरत्नप्राकाराय नमः
३ वज्ररत्नप्रकाराय नमः
३ वैडूर्यरत्नप्राकाराय नमः
३ इन्द्रनीलरत्नप्राकाराय नमः
३ मुक्तारत्नप्राकाराय नमः
३ मरकतरत्नप्राकाराय नमः
३ विद्रुमरत्नप्राकाराय नमः
३ माणिक्यमण्डपाय नमः
३ सहस्रस्तम्भमण्डपाय नमः
३ अमृतवापिकायै नमः
३ आनन्दवापिकायै नमः
३ विमर्शवापिकायै नमः
३ बालातपोद्गाराय नमः

---

1. प्रतिष्ठिते श्रीयन्त्रे प्राणप्रतिष्ठा नास्त्यावश्यकी।

३ चन्द्रिकोद्वाराय नमः
३ महाशृङ्गारपरिघायै नमः
३ महापद्माटव्यै नमः
३ चिन्तामणिमयगृहराजाय नमः
३ पूर्वाम्नायमयपूर्वद्वाराय नमः
३ दक्षिणाम्नायमयदक्षिण-
द्वाराय नमः
३ पश्चिमाम्नायमयपश्चिम-
द्वाराय नमः
३ उत्तराम्नायमयोत्तरद्वाराय नमः
३ रत्नप्रदीपवलयाय नमः
३ मणिमयमहासिंहासनाय नमः
३ ब्रह्ममयैकमञ्चपादाय नमः
३ विष्णुमयैकमञ्चपादाय नमः
३ रुद्रमयैकमञ्चपादाय नमः
३ ईश्वरमयैकमञ्चपादाय नमः
३ सदाशिवमयैकमञ्चफलकाय नमः
३ हंसतूलिकातल्पाय नमः
३ हंसतूलिकामहोपधानाय नमः
३ कौसुम्भास्तरणाय नमः
३ महावितानकाय नमः
३ महामायायवनिकायै नमः

(इति चतुश्चत्वारिंशन्मन्दिरमन्त्रैः तत्तदखिलं भावयन् कुसुमाक्षतैरभ्यर्चयेत्)।

## दीपपूजा

(स्वदक्षभागे गन्धपुष्पाक्षतादीन् निधाय दीपौ दीपान् वाऽभितः प्रज्वाल्य)-

ऐं ह्रीं श्रीं **दीपदेवि महादेवि, शुभं भवतु मे सदा।**
**यावत्पूजासमाप्तिः स्यात् तावत्प्रज्वल सुस्थिरा।।**[1]

(इति पुष्पाञ्जलिं दद्यात्। ततो मूलेन चक्रमध्ये पुष्पाञ्जलिं विकीर्य, मूलत्रिखण्डेन स्वाग्रवामदक्षकोणेषु पुष्पाञ्जलीन् दद्यात्)।

## भूतशुद्धिः

यथा- सुषुम्नावर्त्मना वायुमाकृष्य **'हुं'** बीजेन मूलाधारस्थपद्मे त्रिकोणस्थितज्योतिर्मयलिङ्गं परिवेष्ट्य स्थितां सार्धत्रिवलयां कुण्डलिनीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परःशतसुधामयूखशीतलां तेजस्वरूपामुत्थाप्य **जीवशिवं परमशिवे संयोजयामि स्वाहा** इति मन्त्रेण दीपकलिकाकारं

---

1. घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः।
सितवर्तियुतो दक्षे रक्तवर्तिस्तु वामतः।। दक्षवामभागौ देव्या एव।

हृदिस्थं जीवं कुण्डलिनीमुखेन ब्रह्मरन्ध्रं नीत्वा परमशिवेनैकीभूतं हंसः सोऽहमिति भावयन् वायुमिडया रेचयेत्। ततो—

**वामकुक्षिस्थितं पाप(पुरुष)मङ्गुष्ठपरिमाणकम्।**
**विप्रहत्याशिरोयुक्तं कनकस्तेयबाहुकम्।**
**मदिरापानहृदयं गुरुतल्पकटीद्वयम्।**
**तत्संयोगिपदद्वन्द्वमुपपातकरोमकम्।**
**रक्तश्मश्रुविलोचनमङ्गप्रत्यङ्गपातकम्।**
**खड्गचर्मधरं दुष्टमधोवक्त्रं विचिन्तयेत्।**

ततो **यं** यं इति वायुबीजं स्मरन् वायुं पिङ्गलयापूर्यैनं शोषयेत्। ततो **रं रं** इति वह्निबीजेन पूरकापेक्षया द्विगुणितकालं कुम्भकं विधाय पापपुरुषं **यं** इति वायुबीजं ततोऽप्यधिककालं जपित्वेडया तद्भस्म रेचकेन बहिर्निष्कासयेत्। ब्रह्मरन्ध्रगते चन्द्रमण्डलेऽमृतवर्षिणीं भवानीं भूमिशुद्ध्यर्थं भावयेत्। ततस्तन्मौलिनिःस्यन्द-सुधाकल्लोलवृष्टिभिश्चिन्तयेन्मनसाऽऽत्मानम्।

*इयं भूमिशुद्धिः।*

ततश्च स्वशिरसि कामेश्वरीकामेश्वरयोः रक्तशुक्लचरणन्यासं भावयित्वा तदमृतक्षरणेन सबाह्याभ्यन्तरमात्मानं भावयेदिति *भूतशुद्धिः।*

**अथ केचिद्वदन्ति**–मातृकाःप्रणवं भूतानि च ब्रह्मरन्ध्रे प्रविलाप्य सच्चिन्मयो भूत्वा पापपुरुषं चिन्तयेत्। पापपुरुषोत्थं भस्म 'वं' इति सुधाबीजेन सम्प्लावयेत्। लं लं इति भूबीजेन तद्भस्म कनकाण्डवद् घनीभावमापाद्य विशुद्धमुकुराकारं ब्रह्मरन्ध्रगतं तत्स्मरेत्। आकाशादीनि भूतानि पुनरुत्पादयेत्। ततोऽखण्डं ब्रह्म, तस्मात्तत्प्रेरकः पुरुषः, ततः प्रकृतिः, प्रकृतेर्महान्, ततोऽहंकारः, ततोऽहं त्रिगुणात्मकः, ततः आकाशः, आकाशाद्वायुः, वायोस्तेजः, तेजसो जलम्, जलात्पृथ्वी, पृथ्व्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नाद्रेतः, रेतसः पुरुषः, पुरुषोऽन्नरसमयः हंसः सोऽहमिति कुण्डलिनीं जीवमादाय परसङ्गात्सुधामयीं संस्थाप्य हृदयाम्भोजे मूलाधारगतां स्मरेदिति।

**वयन्तु**–पापपुरुषोत्थभस्मनस्सकाशादप्रामाणिकतमोमहदाद्युत्पत्त्यपेक्षया पापपुरुषदाहोत्थं भस्म पार्थिवप्रपञ्चेन साकं पृथिव्यां प्रविलीयते, पृथिव्या-

विभक्तत्रैवर्ण्यं व्यतिकरितलीलाञ्जनतया
विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते।
पुनस्स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्
रजस्सत्त्वं बिभ्रत्तम इति गुणानां त्रयमिव।। ५३।।
पवित्रीकर्तुं नः पशुपतिपराधीनहृदये
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं
त्रयाणां तीर्थानामुपनयसि सम्भेदमनघम्।। ५४।।
निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती
तवेत्याहुस्सन्तो धरणिधरराजन्यतनये।
त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः
परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः।। ५५।।
तवापर्णे कर्णेजपनयनपैशुन्यचकिताः
निलीयन्ते तोये नियतमनिमेषाश्शफरिकाः।
इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयं
जहाति प्रत्यूषे निशि च विघटय्य प्रविशति।। ५६।।
दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः।। ५७।।
अरालं ते पालीयुगलमगराजन्यतनये
न केषामाधत्ते कुसुमशरकोदण्डकुतुकम्।
तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलस-
न्नपाङ्गव्यासङ्गो दिशति शरसन्धानधिषणाम्।। ५८।।

स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं
चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम्।
यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं
महावीरो मारः प्रमथपतये सज्जितवते।। ५९।।
सरस्वत्याः सूक्तीरमृतलहरीकौशलहरीः
पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविरलम्।
चमत्कारश्लाघाचलितशिरसः कुण्डलगणो
झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते।। ६०।।
असौ नासावंशस्तुहिनगिरिवंशध्वजपटि
त्वदीयो नेदीयः फलतु फलमस्माकमुचितम्।
वहत्यन्तर्मुक्ताः शिशिरकरनिःश्वासगलितं
समृद्ध्या यत्तासां बहिरपि च मुक्तामणिधरः।। ६१।।
प्रकृत्याऽऽरक्तायास्तव सुदति दन्तच्छदरुचेः
प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता।
न बिम्बं तद्बिम्बप्रतिफलनरागादरुणितं
तुलामध्यारोढुं कथमिव विलज्जेत कलया।। ६२।।
स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां
चकोराणामासीदतिरसतया चञ्चुजडिमा।
अतस्ते शीतांशोरमृतलहरीमाम्लरुचयः
पिबन्ति स्वच्छन्दं निशि निशि भृशं काञ्जिकधिया।। ६३।।
अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजपा
जपापुष्पच्छाया तव जननि जिह्वा जयति सा।
यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी
सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा।। ६४।।

रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभिः
निवृत्तैश्चण्डांशुत्रिपुरहरनिर्माल्यविमुखैः।
विशाखेन्द्रोपेन्द्रैः शशिविशदकर्पूरशकलाः
विलीयन्ते मातस्तव वदनताम्बूलकवलाः ।। ६५।।
विपञ्च्या गायन्ती विविधमपदानं पशुपतेः
त्वयाऽऽरब्धे वक्तुं चलितशिरसा साधुवचने।
तदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम्।। ६६।।
कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया
गिरीशेनोदस्तं मुहुरधरपानाकुलतया।
करेग्राह्यं शम्भोर्मुखमुकुरवृन्तं गिरिसुते
कथङ्कारं ब्रूमस्तव चुबुकमौपम्यरहितम् ।। ६७।।
भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती
तव ग्रीवा धत्ते मुखकमलनालश्रियमियम्।
स्वतः श्वेता कालागुरुबहुलजम्बालमलिना
मृणालीलालित्यं वहति यदधो हारलतिका।। ६८।।
गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे
विवाहव्यानद्धप्रगुणगुणसंख्याप्रतिभुवः।
विराजन्ते नानाविधमधुररागाकरभुवां
त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते।। ६९।।
मृणाली मृद्वीनां तव भुजलतानां चतसृणां
चतुर्भिस्सौन्दर्यं सरसिजभवस्तौति वदनैः।
नखेभ्यः संत्रस्यन् प्रथममथनादन्धकरिपोः
चतुर्णां शीर्षाणां सममभयहस्तार्पणधिया।। ७०।।

नखानामुद्योतैर्नवनलिनरागं विहसतां
करिणां ते कान्तिं कथय कथयामः कथमुमे।
कयाचिद्वा साम्यं भजतु कलया हन्त कमलं
यदि क्रीडल्लक्ष्मीचरणतललाक्षारसचणम्।। ७१।।

समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं
तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम्।
यदालोक्याशङ्काकुलितहृदयो हासजनकः
स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति।। ७२।।

अमू ते वक्षोजावमृतरसमाणिक्यकुतुपौ
न सन्देहस्पन्दो नगपतिपताके मनसि नः।
पिबन्तौ तौ यस्मादविदितवधूसङ्गरसिकौ
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ।। ७३।।

वहत्यम्ब स्तम्बेरमदनुजकुम्भप्रकृतिभिः
समारब्धां मुक्तामणिभिरमलां हारलतिकाम्।
कुचाभोगो बिम्बाधररुचिभिरन्तश्शबलितां
प्रतापव्यामिश्रां पुरदमयितुः कीर्तिमिव ते।। ७४।।

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः
पयःपारावारः परिवहति सारस्वतमिव।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्
कवीनां प्रौढानामजनि कमनीयः कवयिता।। ७५।।

हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः।
समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते तव जननि रोमावलिरिति।। ७६।।

यदेतत्कालिन्दीतनुतरतरङ्गाकृति शिवे
कृशे मध्ये किञ्चिज्जननि तव यद्भाति सुधियाम्।
विमर्दादन्योन्यं कुचकलशयोरन्तरगतं
तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम्।। ७७।।

स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलता-
कलावालं कुण्डं कुसुमशरतेजोहुतभुजः।
रतेर्लीलागारं किमपि तव नाभिर्गिरिसुते
बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ।। ७८।।

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो
नमन्मूर्तेनारीतिलक शनकैस्त्रुट्यत इव।
चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा
समावस्थास्थेम्नो भवतु कुशलं शैलतनये।। ७९।।

कुचौ सद्यस्विद्यत्तटघटितकूर्पासभिदुरौ
कषन्तौ दोर्मूले कनककलशाभौ कलयता।
तव त्रातुं भङ्गादलमिति विलग्नं तनुभुवा
त्रिधा नद्धं देवि त्रिवलि लवलीवल्लिभिरिव।। ८०।।

गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजान्
नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं
नितम्बप्राग्भारस्स्थगयति लघुत्वं नयति च।। ८१।।

करीन्द्राणां शुण्डान् कनककदलीकाण्डपटली-
मुभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवति।
सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते
विधिज्ञे जानुभ्यां विबुधकरिकुम्भद्वयमसि।। ८२।।

पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते
निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत।
यदग्रे दृश्यन्ते दशशरफलाः पादयुगली-
नखाग्रच्छद्मानस्सुरमुकुटशाणैकनिशिताः ।। ८३।।

श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातश्शिरसि दयया धेहि चरणौ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ।। ८४।।

नमोवाकं ब्रूमो नयनरमणीयाय पदयोः
तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
पशूनामीशानः प्रमदवनकङ्केलितरवे ।। ८५।।

मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं
ललाटे भर्त्तारं चरणकमले ताडयति ते।
चिरादन्तश्शल्यं दहनकृतमुन्मूलितवता
तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा।। ८६।।

हिमानीहन्तव्यं हिमगिरिनिवासैकचतुरौ
निशायां निद्राणं निशि चरमभागे च विशदौ।
वरं लक्ष्मीपात्रं श्रियमतिसृजन्तौ समयिनां
सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम्।। ८७।।

पदं ते कीर्तीनां प्रपदमपदं देवि विपदां
कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम्।
कथं वा बाहुभ्यामुपयमनकाले पुरभिदा
यदादाय न्यस्तं दृषदि दयमानेन मनसा ।। ८८।।

नखैर्नाकस्त्रीणां करकमलसङ्कोचशशिभिः
तरूणां दिव्यानां हसत इव ते चण्डि चरणौ।
फलानि स्वस्थेभ्यः किसलयकराग्रेण ददतां
दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ।। ८९।।

ददाने दीनेभ्यश्श्रियमनिशमाशानुसदृशी-
ममन्दं सौन्दर्यप्रकरमकरन्दं विकिरति।
तवास्मिन्मन्दारस्तबकसुभगे यातु चरणे
निमज्जन्मज्जीवः करणचरणष्षट्चरणताम्।। ९०।।

पदन्यासक्रीडापरिचयमिवारब्धुमनसः
स्खलन्तस्ते खेलं भवनकलहंसा न जहति।
अतस्तेषां शिक्षां सुभगमणिमञ्जीररणित-
च्छलादाचक्षाणं चरणकमलं चारुचरिते।। ९१।।

गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः
शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः।
त्वदीयानां भासां प्रतिफलनरागारुणतया
शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम्।। ९२।।

अराला केशेषु प्रकृतिसरला मन्दहसिते
शिरीषाभा चित्ते दृषदुपलशोभा कुचतटे।
भृशं तन्वी मध्ये पृथुरुरसिजारोहविषये
जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा।। ९३।।

कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं
कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम्।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं
विधिर्भूयो भूयो निबिडयति नूनं तव कृते।। ९४।।

पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः
सपर्यामर्यादा तरलकरणानामसुलभा।
तथा ह्येते नीताः शतमखमुखाः सिद्धिमतुलां
तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः।। ९५।।

कलत्रं वैधात्रं कति कति भजन्ते न कवयः
श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः।
महादेवं हित्वा तव सति सतीनामचरमे
कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ।। ९६।।

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम्।
तुरीया कापि त्वं दुरधिगमनिस्सीममहिमा
महामाया विश्वं भ्रमयसि परब्रह्ममहिषि।। ९७।।

कदा काले मातः कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम्।
प्रकृत्या मूकानामपि च कविताकारणतया
कदा धत्ते वाणीमुखकमलताम्बूलरसताम्।। ९८।।

सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा।
चिरंजीवन्नेव क्षपितपशुपाशव्यतिकरः
परानन्दाभिख्यं रसयति रसं त्वद्भजनवान्।। ९९।।

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम्।। १००।।

*षोडशानन्दनाथश्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे श्रीशङ्कराचार्यरचिता सौन्दर्यलहरी सम्पूर्णा।।*

## तन्त्रराजोक्तं नित्याकवचम्

समस्तापद्विमुक्त्यर्थं सर्वसम्पदवाप्तये।
भूतप्रेतपिशाचादिपीडाशान्त्यै सुखाप्तये।।
समस्तरोगनाशाय समरे विजयाय च।
चौरसिंहद्वीपिगजगवयादि भयानके ।।
अरण्ये शैलगहने मार्गे दुर्भिक्षके तथा।
सलिलाग्निमरुत्पीडास्वब्धौ पोतादिसङ्कटे।।
प्रजप्य नित्याकवचं सकृत्सर्वं तरत्यसौ।
सुखी जीवति निर्द्वन्द्वो निःसपत्नो जितेन्द्रियः।।
शृणु तत्कवचं देवि! वक्ष्ये तव तदात्मकम्।
येनाहमपि युद्धेषु देवासुरजयी सदा।।
सर्वतः सर्वदाऽऽत्मानं ललिता पातु सर्वदा।
कामेशी पुरतः पातु भगमाला त्वनन्तरम्।।
दिशं पातु तथा दक्षपार्श्वं मे पातु सर्वदा।
नित्यक्लिन्ना तु भेरुण्डा दिशं पातु सदा मम।।
तथैव पश्चिमं भागं रक्षेत्सा वह्निवासिनी।
महावज्रेश्वरी रक्षेदनन्तरदिशं सदा ।।
वामपार्श्वं सदा पातु दूती मे त्वरिता ततः।
पालयेत्तु दिशं वात्यां रक्षेन्मां कुलसुन्दरी।।
नित्या मामूर्ध्वतः पातु साऽधो मे पातु सर्वदा।
नित्या नीलपताकाख्या विजया सर्वतश्च माम्।।
करोतु मे मङ्गलानि सर्वदा सर्वमङ्गला।
देहेन्द्रियमनःप्राणान् ज्वालामालिनिविग्रहा ।।
पालयेदनिशं चित्रा चित्तं मे पातु सर्वदा।
कामात् क्रोधात् तथा लोभान्मोहान्मानान्मदादपि।।
पापान्मत्सरतःशोकात् संशयात्सर्वतः सदा।
स्तैमित्याच्च समुद्योगादशुभेषु तु कर्मसु ।।

असत्यात् क्रूरचिन्तातो हिंसातश्चोरतस्तथा।
रक्षन्तु मां सर्वदा ताःकुर्वन्त्विच्छां शुभेषु च।।
नित्याःषोडश मां पान्तु गजारूढाः स्वशक्तिभिः।
तथा हयसमारूढाः पान्तु मां सर्वतः सदा।।
सिंहारूढास्तथा पान्तु मां तरक्षुगता अपि।
रथारूढाश्च मां पान्तु सर्वतः सर्वदा रणे।।
तार्क्ष्यारूढाश्च मां पान्तु तथा व्योमगतास्तु ताः।
भूगताः सर्वदा पान्तु मां सर्वत्र च सर्वदा।।
भूत–प्रेतपिशाचापस्मारकृत्यादिकान् गदान्।
द्रावयन्तु स्वशक्तीनां भीषणैरायुधैर्मम ।।
गजाश्वद्वीपिपञ्चास्यतार्क्ष्यारूढाखिलायुधाः।
असंख्याः शक्तयो देव्याः पान्तु मां सर्वतः सदा।।
सायं प्रातर्जपन्नित्याकवचं सर्वरत्नकम्।
कदाचिन्नाशुभं पश्येन्न शृणोति च तत्समः।।

*षोडशानन्दनाथश्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे नित्याकवचं सम्पूर्णम्।।*

## श्रीललितासहस्रनामावलिः

अस्य श्रीललितासहस्रनामस्तोत्रमालामन्त्रस्य वशिन्यादिभ्यो वाग्देवताभ्य ऋषिभ्यो नमः शिरसि। अनुष्टुप्छन्दसे नमः (मुखे) श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः (हृदये)। ३ क. ५ बीजाय नमः (गुह्ये)। ३ स० ४ शक्तये नमः (पादयोः)। ३ ह० ६ कीलकाय नमः (नाभौ) श्रीललिताम्बाप्रीत्यर्थं पूजने विनियोगाय नमः (करसम्पुटे)। (कूटत्रयं द्विरावृत्य बालाया वा षडङ्गद्वयम्।)

**ध्यानश्लोकः**

**सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुरत्–**
**तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्।**
**पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं,**
**सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम्।। १।।**

(मानसैः पञ्चोपचारैः सम्पूज्य)

# श्रीललितासहस्रनामावलिः

## (ऐं ह्रीं श्रीं)

ऐं ह्रीं श्रीं श्रीमात्रे नमः
३ श्रीमहाराज्ञ्यै नमः
३ श्रीमत्सिंहासनेश्वर्यै नमः
३ चिदग्निकुण्डसम्भूतायै नमः
३ देवकार्यसमुद्यतायै नमः
३ उद्यद्भानुसहस्राभायै नमः
३ चतुर्बाहुसमन्वितायै नमः
३ रागस्वरूपपाशाढ्यायै नमः
३ क्रोधाकाराङ्कुशोज्ज्वलायै नमः
३ मनोरूपेक्षुकोदण्डायै नमः १०
३ पञ्चतन्मात्रसायकायै नमः
३ निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डलायै नमः
३ चम्पकाशोकपुन्नागसौगन्धिकलसत्कचायै नमः
३ कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डितायै नमः
३ अष्टमीचन्द्रविभ्राजदलिकस्थलशोभितायै नमः
३ मुखचन्द्रकलङ्काभमृगनाभिविशेषकायै नमः
३ वदनस्मरमाङ्गल्यगृहतोरणचिल्लिकायै नमः
३ वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचनायै नमः
३ नवचम्पकपुष्पाभनासादण्डविराजितायै नमः
३ ताराकान्तितिरस्कारिनासाभरणभासुरायै नमः २०
३ कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरायै नमः
३ ताटङ्कयुगलीभूततपनोडुपमण्डलायै नमः
३ पद्मरागशिलादर्शपरिभाविकपोलभुवे नमः
३ नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदायै नमः

३ शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वलायै नमः
३ कर्पूरवीटिकामोदसमाकर्षिदिगन्तरायै नमः
३ निजसंल्लापमाधुर्यविनिर्भर्त्सितकच्छप्यै नमः
३ मन्दस्मितप्रभापूरमज्जत्कामेशमानसायै नमः
३ अनाकलितसादृश्यचिबुकश्रीविराजितायै नमः
३ कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरायै नमः ३०
३ कनकाङ्गदकेयूरकमनीयभुजान्वितायै नमः
३ रत्नग्रैवेयचिन्ताकल्लोलमुक्ताफलान्वितायै नमः
३ कामेश्वरप्रेमरत्न-मणिप्रतिपणस्तन्यै नमः
३ नाभ्यालवालरोमालिलताफलकुचद्वय्यै नमः
३ लक्ष्यरोमलताधारतासमुन्नेयमध्यमायै नमः
३ स्तनभारदलन्मध्यपट्टबन्धवलित्रयायै नमः
३ अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतट्यै नमः
३ रत्नकिङ्किणिकारम्यरशनादामभूषितायै नमः
३ कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्वितायै नमः
३ माणिक्यमुकुटाकारजानुद्वयविराजितायै नमः ४०
३ इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिकायै नमः
३ गूढगुल्फायै नमः
३ कूर्मपृष्ठजयिष्णुप्रपदान्वितायै नमः
३ नखदीधितिसञ्छन्ननमज्जनतमोगुणायै नमः
३ पदद्वयप्रभाजालपराकृतसरोरुहायै नमः
३ सिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजायै नमः
३ मरालीमन्दगमनायै नमः
३ महालावण्यशेवधये नमः
३ सर्वारुणायै नमः
३ अनवद्याङ्ग्यै नमः ५०
३ सर्वाभरणभूषितायै नमः
३ शिवकामेश्वराङ्कस्थायै नमः

३ शिवायै नमः
३ स्वाधीनवल्लभायै नमः
३ सुमेरुमध्यशृङ्गस्थायै नमः
३ श्रीमन्नगरनायिकायै नमः
३ चिन्तामणिगृहान्तस्थायै नमः
३ पञ्चब्रह्मासनस्थितायै नमः
३ महापद्माटवीसंस्थायै नमः
३ कदम्बवनवासिन्यै नमः ६०
३ सुधासागरमध्यस्थायै नमः
३ कामाक्ष्यै नमः
३ कामदायिन्यै नमः
३ देवर्षिगणसङ्घातस्तूयमानात्मवैभवायै नमः
३ भण्डासुरवधोद्युक्तशक्तिसेनासमन्वितायै नमः
३ सम्पत्करीसमारूढसिन्धुरव्रजसेवितायै नमः
३ अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृतायै नमः
३ चक्रराजरथारूढसर्वायुधपरिष्कृतायै नमः
३ गेयचक्ररथारूढमन्त्रिणीपरिसेवितायै नमः ७०
३ किरिचक्ररथारूढदण्डनाथापुरस्कृतायै नमः
३ ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगायै नमः
३ भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षितायै नमः
३ नित्यापराक्रमाटोपनिरीक्षणसमुत्सुकायै नमः
३ भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दितायै नमः
३ मन्त्रिण्यम्बाविरचितविषङ्गवधतोषितायै नमः
३ विशुक्रप्राणहरणवाराहीवीर्यनन्दितायै नमः
३ कामेश्वरमुखालोककल्पितश्रीगणेश्वरायै नमः
३ महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षितायै नमः
३ भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिण्यै नमः
३ कराङ्गुलिनखोत्पन्ननारायणदशाकृत्यै नमः ८०

३ महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिकायै नमः
३ कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यकायै नमः
३ ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवायै नमः
३ हरनेत्राग्निसन्दग्धकामसञ्जीवनौषध्यै नमः
३ श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजायै नमः
३ कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिण्यै नमः
३ शक्तिकूटैकतापन्नकट्यधोभागधारिण्यै नमः

३ मूलमन्त्रात्मिकायै नमः
३ मूलकूटत्रयकलेवरायै नमः
३ कुलामृतैकरसिकायै नमः ९०
३ कुलसङ्केतपालिन्यै नमः
३ कुलाङ्गनायै नमः
३ कुलान्तस्थायै नमः
३ कौलिन्यै नमः
३ कुलयोगिन्यै नमः
३ अकुलायै नमः
३ समयान्तस्थायै नमः
३ समयाचारतत्परायै नमः
३ मूलाधारैकनिलयायै नमः
३ ब्रह्मग्रन्थिविभेदिन्यै नमः १००
३ मणिपूरान्तरुदितायै नमः
३ विष्णुग्रन्थिविभेदिन्यै नमः
३ आज्ञाचक्रान्तरालस्थायै नमः
३ रुद्रग्रन्थिविभेदिन्यै नमः
३ सहस्राराम्बुजारूढायै नमः
३ सुधासाराभिवर्षिण्यै नमः
३ तडिल्लतासमरुच्यै नमः
३ षट्चक्रोपरिसंस्थितायै नमः

३ महासक्त्यै नमः
३ कुण्डलिन्यै नमः ११०
३ विसतन्तुतनीयस्यै नमः
३ भवान्यै नमः
३ भावनागम्यायै नमः
३ भवारण्यकुठारिकायै नमः
३ भद्रप्रियायै नमः
३ भद्रमूर्तये नमः
३ भक्तसौभाग्यदायिन्यै नमः
३ भक्तिप्रियायै नमः
३ भक्तिगम्यायै नमः
३ भक्तिवश्यायै नमः १२०
३ भयापहायै नमः
३ शाम्भव्यै नमः
३ शारदाराध्यायै नमः
३ शर्वाण्यै नमः
३ शर्मदायिन्यै नमः
३ शाङ्कर्यै नमः
३ श्रीकर्यै नमः
३ साध्व्यै नमः
३ शरच्चन्द्रनिभाननायै नमः

३ शातोदर्यै नमः १३०
३ शान्तिमत्यै नमः
३ निराधारायै नमः
३ निरञ्जनायै नमः
३ निर्लेपायै नमः
३ निर्मलायै नमः
३ नित्यायै नमः
३ निराकारायै नमः
३ निराकुलायै नमः
३ निर्गुणायै नमः
३ निष्कलायै नमः १४०
३ शान्तायै नमः
३ निष्कामायै नमः
३ निरुपप्लवायै नमः
३ नित्यमुक्तायै नमः
३ निर्विकारायै नमः
३ निष्प्रपञ्चायै नमः
३ निराश्रयायै नमः
३ नित्यशुद्धायै नमः
३ नित्यबुद्धायै नमः
३ निरवद्यायै नमः १५०
३ निरन्तरायै नमः
३ निष्कारणायै नमः
३ निष्कलङ्कायै नमः
३ निरुपाधये नमः
३ निरीश्वरायै नमः
३ नीरागायै नमः
३ रागमथन्यै नमः
३ निर्मदायै नमः
३ मदनाशिन्यै नमः
३ निश्चिन्तायै नमः १६०
३ निरहङ्कारायै नमः
३ निर्मोहायै नमः
३ मोहनाशिन्यै नमः
३ निर्ममायै नमः
३ ममताहन्त्र्यै नमः
३ निष्पापायै नमः
३ पापनाशिन्यै नमः
३ निष्क्रोधायै नमः
३ क्रोधशमन्यै नमः
३ निर्लोभायै नमः १७०
३ लोभनाशिन्यै नमः
३ निःसंशयायै नमः
३ संशयघ्न्यै नमः
३ निर्भवायै नमः
३ भवनाशिन्यै नमः
३ निर्विकल्पायै नमः
३ निराबाधायै नमः
३ निर्भेदायै नमः
३ भेदनाशिन्यै नमः
३ निर्नाशायै नमः १८०
३ मृत्युमथन्यै नमः
३ निष्क्रियायै नमः
३ निष्परिग्रहायै नमः
३ निस्तुलायै नमः
३ नीलचिकुरायै नमः
३ निरपायायै नमः
३ निरत्ययायै नमः
३ दुर्लभायै नमः
३ दुर्गमायै नमः

३ दुर्गायै नमः १९०
३ दुःखहन्त्र्यै नमः
३ सुखप्रदायै नमः
३ दुष्टदूरायै नमः
३ दुराचारशमन्यै नमः
३ दोषवर्जितायै नमः
३ सर्वज्ञायै नमः
३ सान्द्रकरुणायै नमः
३ समानाधिकवर्जितायै नमः
३ सर्वशक्तिमय्यै नमः
३ सर्वमङ्गलायै नमः २००
३ सद्गतिप्रदायै नमः
३ सर्वेश्वर्यै नमः
३ सर्वमय्यै नमः
३ सर्वमन्त्रस्वरूपिण्यै नमः
३ सर्वयन्त्रात्मिकायै नमः
३ सर्वतन्त्ररूपायै नमः
३ मनोन्मन्यै नमः
३ माहेश्वर्यै नमः
३ महादेव्यै नमः
३ महालक्ष्म्यै नमः २१०
३ मृडप्रियायै नमः
३ महारूपायै नमः
३ महापूज्यायै नमः
३ महापातकनाशिन्यै नमः
३ महामायायै नमः
३ महासत्त्वायै नमः
३ महाशक्त्यै नमः
३ महारत्यै नमः
३ महाभोगायै नमः
३ महेश्वर्यायै नमः २२०
३ महावीर्यायै नमः
३ महाबलायै नमः
३ महाबुद्ध्यै नमः
३ महासिद्ध्यै नमः
३ महायोगीश्वरेश्वर्यै नमः
३ महातन्त्रायै नमः
३ महामन्त्रायै नमः
३ महायन्त्रायै नमः
३ महासनायै नमः
३ महायागक्रमाराध्यायै नमः २३०
३ महाभैरवपूजितायै नमः
३ महेश्वरमहाकल्प–
महाताण्डवसाक्षिण्यै नमः
३ महाकामेशमहिष्यै नमः
३ महात्रिपुरसुन्दर्यै नमः
३ चतुःषष्ट्युपचाराढ्यायै नमः
३ चतुःषष्टिकलामय्यै नमः
३ महाचतुःषष्टिकोटियोगिनी–
गणसेवितायै नमः
३ मनुविद्यायै नमः
३ चन्द्रविद्यायै नमः
३ चन्द्रमण्डलमध्यगायै नमः २४०
३ चारुरूपायै नमः
३ चारुहासायै नमः
३ चारुचन्द्रकलाधरायै नमः
३ चराचरजगन्नाथायै नमः
३ चक्रराजनिकेतनायै नमः
३ पार्वत्यै नमः
३ पद्मनयनायै नमः

३ पद्मरागसमप्रभायै नमः
३ पञ्चप्रेतासनासीनायै नमः
३ पञ्चब्रह्मस्वरूपिण्यै नमः २५०
३ चिन्मय्यै नमः
३ परमानन्दायै नमः
३ विज्ञानघनरूपिण्यै नमः
३ ध्यानध्यातृध्येयरूपायै नमः
३ धर्माधर्मविवर्जितायै नमः
३ विश्वरूपायै नमः
३ जागरिण्यै नमः
३ स्वपन्त्यै नमः
३ तैजसात्मिकायै नमः
३ सुप्तायै नमः २६०
३ प्राज्ञात्मिकायै नमः
३ तुर्यायै नमः
३ सर्वावस्थाविवर्जितायै नमः
३ सृष्टिकर्त्र्यै नमः
३ ब्रह्मरूपायै नमः
३ गोप्त्र्यै नमः
३ गोविन्दरूपिण्यै नमः
३ संहारिण्यै नमः
३ रुद्ररूपायै नमः
३ तिरोधानकर्यै नमः २७०
३ ईश्वर्यै नमः
३ सदाशिवायै नमः
३ अनुग्रहदायै नमः
३ पञ्चकृत्यपरायणायै नमः
३ भानुमण्डलमध्यस्थायै नमः
३ भैरव्यै नमः
३ भगमालिन्यै नमः
३ पद्मासनायै नमः
३ भगवत्यै नमः
३ पद्मनाभसहोदर्यै नमः २८०
३ उन्मेषनिमिषोत्पन्नविपन्न-
भुवनावल्यै नमः
३ सहस्रशीर्षवदनायै नमः
३ सहस्राक्ष्यै नमः
३ सहस्रपदे नमः
३ आब्रह्मकीटजनन्यै नमः
३ वर्णाश्रमविधायिन्यै नमः
३ निजाज्ञारूपनिगमायै नमः
३ पुण्यापुण्यफलप्रदायै नमः
३ श्रुतिसीमन्तसिन्दूरीकृत-
पादाब्जधूलिकायै नमः
३ सकलागमसन्दोहशुक्ति-
सम्पुटमौक्तिकायै नमः २९०
३ पुरुषार्थप्रदायै नमः
३ पूर्णायै नमः
३ भोगिन्यै नमः
३ भुवनेश्वर्यै नमः
३ अम्बिकायै नमः
३ अनादिनिधनायै नमः
३ हरिब्रह्मेन्द्रसेवितायै नमः
३ नारायण्यै नमः
३ नादरूपायै नमः
३ नामरूपविवर्जितायै नमः ३००
३ ह्रीङ्कार्यै नमः
३ ह्रीमत्यै नमः
३ हृद्यायै नमः
३ हेयोपादेयवर्जितायै नमः

३ राजराजार्चितायै नमः
३ राज्ञ्यै नमः
३ रम्यायै नमः
३ राजीवलोचनायै नमः
३ रञ्जन्यै नमः
३ रमण्यै नमः ३१०
३ रस्यायै नमः
३ रणत्किङ्किणिमेखलायै नमः
३ रमायै नमः
३ राकेन्दुवदनायै नमः
३ रतिरूपायै नमः
३ रतिप्रियायै नमः
३ रक्षाकर्यै नमः
३ राक्षसघ्न्यै नमः
३ रामायै नमः
३ रमणलम्पटायै नमः ३२०
३ काम्यायै नमः
३ कामकलारूपायै नमः
३ कदम्बकुसुमप्रियायै नमः
३ कल्याण्यै नमः
३ जगतीकन्दायै नमः
३ करुणारससागरायै नमः
३ कलावत्यै नमः
३ कलालापायै नमः
३ कान्तायै नमः
३ कादम्बरीप्रियायै नमः ३३०
३ वरदायै नमः
३ वामनयनायै नमः
३ वारुणीमदविह्वलायै नमः
३ विश्वाधिकायै नमः
३ वेदवेद्यायै नमः
३ विन्ध्याचलनिवासिन्यै नमः
३ विधात्र्यै नमः
३ वेदजनन्यै नमः
३ विष्णुमायायै नमः
३ विलासिन्यै नमः ३४०
३ क्षेत्रस्वरूपायै नमः
३ क्षेत्रेश्यै नमः
३ क्षेत्रक्षेत्रज्ञपालिन्यै नमः
३ क्षयवृद्धिविनिर्मुक्तायै नमः
३ क्षेत्रपालसमर्चितायै नमः
३ विजयायै नमः
३ विमलायै नमः
३ वन्द्यायै नमः
३ वन्दारुजनवत्सलायै नमः
३ वाग्वादिन्यै नमः ३५०
३ वामकेश्यै नमः
३ वह्निमण्डलवासिन्यै नमः
३ भक्तिमत्कल्पलतिकायै नमः
३ पशुपाशविमोचिन्यै नमः
३ संहृताशेषपाखण्डायै नमः
३ सदाचारप्रवर्तिकायै नमः
३ तापत्रयाग्निसन्तप्तसमाह्लादन-
चन्द्रिकायै नमः
३ तरुण्यै नमः
३ तापसाराध्यायै नमः
३ तनुमध्यायै नमः ३६०
३ तमोपहायै नमः
३ चित्यै नमः
३ तत्पदलक्ष्यार्थायै नमः

३ चिदेकरसरूपिण्यै नमः
३ स्वात्मानन्दलवीभूत-
ब्रह्माद्यानन्दसन्तत्यै नमः
३ परायै नमः
३ प्रत्यक्चितीरूपायै नमः
३ पश्यन्त्यै नमः
३ परदेवतायै नमः
३ मध्यमायै नमः ३७०
३ वैखरीरूपायै नमः
३ भक्तमानसहंसिकायै नमः
३ कामेश्वरप्राणनाड्यै नमः
३ कृतज्ञायै नमः
३ कामपूजितायै नमः
३ शृङ्गाररसपूर्णायै नमः
३ जयायै नमः
३ जालन्धरस्थितायै नमः
३ ओड्याणपीठनिलयायै नमः
३ बिन्दुमण्डलवासिन्यै नमः ३८०
३ रहोयागक्रमाराध्यायै नमः
३ रहस्तर्पणतर्पितायै नमः
३ सद्यःप्रसादिन्यै नमः
३ विश्वसाक्षिण्यै नमः
३ साक्षिवर्जितायै नमः
३ षडङ्गदेवतायुक्तायै नमः
३ षाड्गुण्यपरिपूरितायै नमः
३ नित्यक्लिन्नायै नमः
३ निरुपमायै नमः
३ निर्वाणसुखदायिन्यै नमः ३९०
३ नित्याषोडशिकारूपायै नमः
३ श्रीकण्ठार्धशरीरिण्यै नमः
३ प्रभावत्यै नमः
३ प्रभारूपायै नमः
३ प्रसिद्धायै नमः
३ परमेश्वर्यै नमः
३ मूलप्रकृत्यै नमः
३ अव्यक्तायै नमः
३ व्यक्ताव्यक्तस्वरूपिण्यै नमः
३ व्यापिन्यै नमः ४००
३ विविधाकारायै नमः
३ विद्याविद्यास्वरूपिण्यै नमः
३ महाकामेशनयन-
कुमुदाह्लादकौमुद्यै नमः
३ भक्तहार्दतमोभेद-
भानुमद्भानुसन्तत्यै नमः
३ शिवदूत्यै नमः
३ शिवाराध्यायै नमः
३ शिवमूर्त्यै नमः
३ शिवङ्कर्यै नमः
३ शिवप्रियायै नमः
३ शिवपरायै नमः ४१०
३ शिष्टेष्टायै नमः
३ शिष्टपूजितायै नमः
३ अप्रमेयायै नमः
३ स्वप्रकाशायै नमः
३ मनोवाचामगोचरायै नमः
३ चिच्छक्त्यै नमः
३ चेतनारूपायै नमः
३ जडशक्त्यै नमः
३ जडात्मिकायै नमः
३ गायत्र्यै नमः ४२०

३ व्याहृत्यै नमः
३ सन्ध्यायै नमः
३ द्विजवृन्दनिषेवितायै नमः
३ तत्त्वासनायै नमः
३ तस्मै नमः
३ तुभ्यं नमः
३ अय्यै नमः
३ पञ्चकोशान्तरस्थितायै नमः
३ निःसीममहिम्ने नमः
३ नित्ययौवनायै नमः ४३०
३ मदशालिन्यै नमः
३ मदघूर्णितरक्ताक्ष्यै नमः
३ मदपाटलगण्डभुवे नमः
३ चन्दनद्रवदिग्धाङ्ग्यै नमः
३ चाम्पेयकुसुमप्रियायै नमः
३ कुशलायै नमः
३ कोमलाकारायै नमः
३ कुरुकुल्लायै नमः
३ कुलेश्वर्यै नमः
३ कुलकुण्डालयायै नमः ४४०
३ कौलमार्गतत्परसेवितायै नमः
३ कुमारगणनाथाम्बायै नमः
३ तुष्ट्यै नमः
३ पुष्ट्यै नमः
३ मत्यै नमः
३ धृत्यै नमः
३ शान्त्यै नमः
३ स्वस्तिमत्यै नमः
३ कान्त्यै नमः
३ नन्दिन्यै नमः ४५०

३ विघ्ननाशिन्यै नमः
३ तेजोवत्यै नमः
३ त्रिनयनायै नमः
३ लोलाक्षीकामरूपिण्यै नमः
३ मालिन्यै नमः
३ हंसिन्यै नमः
३ मात्रे नमः
३ मलयाचलवासिन्यै नमः
३ सुमुख्यै नमः
३ नलिन्यै नमः ४६०
३ सुभ्रुवे नमः
३ शोभनायै नमः
३ सुरनायिकायै नमः
३ कालकण्ठ्यै नमः
३ कान्तिमत्यै नमः
३ क्षोभिण्यै नमः
३ सूक्ष्मरूपिण्यै नमः
३ वज्रेश्वर्यै नमः
३ वामदेव्यै नमः
३ वयोवस्थाविवर्जितायै नमः४७०
३ सिद्धेश्वर्यै नमः
३ सिद्धविद्यायै नमः
३ सिद्धमात्रे नमः
३ यशस्विन्यै नमः
३ विशुद्धिचक्रनिलयायै नमः
३ आरक्तवर्णायै नमः
३ त्रिलोचनायै नमः
३ खट्वाङ्गादिप्रहरणायै नमः
३ वदनैकसमन्वितायै नमः
३ पायसान्नप्रियायै नमः ४८०

३ त्वक्स्थायै नमः
३ पशुलोकभयङ्कर्यै नमः
३ अमृतादिमहाशक्ति
संवृतायै नमः
३ डाकिनीश्वर्यै नमः
३ अनाहताब्जनिलयायै नमः
३ श्यामाभायै नमः
३ वदनद्वयायै नमः
३ दंष्ट्रोज्ज्वलायै नमः
३ अक्षमालादिधरायै नमः
३ रुधिरसंस्थितायै नमः ४९०
३ कालारात्र्यादिशक्त्योघ-
वृतायै नमः
३ स्निग्धौदनप्रियायै नमः
३ महावीरेन्द्रवरदायै नमः
३ राकिण्यम्बास्वरूपिण्यै नमः
३ मणिपूराब्जनिलयायै नमः
३ वदनत्रयसंयुतायै नमः
३ वज्रादिकायुधोपेतायै नमः
३ डामर्यादिभिरावृतायै नमः
३ रक्तवर्णायै नमः
३ मांसनिष्ठायै नमः ५००
३ गुडान्नप्रीतमानसायै नमः
३ समस्तभक्तसुखदायै नमः
३ लाकिन्यम्बास्वरूपिण्यै नमः
३ स्वाधिष्ठानाम्बुजगतायै नमः
३ चतुर्वक्त्रमनोहरायै नमः
३ शूलाद्यायुधसम्पन्नायै नमः
३ पीतवर्णायै नमः
३ अतिगर्वितायै नमः
३ मेदोनिष्ठायै नमः
३ मधुप्रीतायै नमः ५१०
३ बन्धिन्यादिसमन्वितायै नमः
३ दध्यन्नासक्तहृदयायै नमः
३ काकिनीरूपधारिण्यै नमः
३ मूलाधाराम्बुजारूढायै नमः
३ पञ्चवक्त्रायै नमः
३ अस्थिसंस्थितायै नमः
३ अङ्कुशादिप्रहरणायै नमः
३ वरदादिनिषेवितायै नमः
३ मुद्गौदनासक्तचित्तायै नमः
३ साकिन्यम्बास्वरूपिण्यै नमः
३ आज्ञाचक्राब्जनिलयायै नमः
३ शुक्लवर्णायै नमः
३ षडाननायै नमः
३ मज्जासंस्थायै नमः
३ हंसवतीमुख्यशक्ति-
समन्वितायै नमः
३ हरिद्रान्नैकरसिकायै नमः
३ हाकिनीरूपधारिण्यै नमः
३ सहस्रदलपद्मस्थायै नमः
३ सर्ववर्णोपशोभितायै नमः
३ सर्वायुधधरायै नमः ५३०
३ शुक्लसंस्थितायै नमः
३ सर्वतोमुख्यै नमः
३ सर्वौदनप्रीतचित्तायै नमः
३ याकिन्यम्बास्वरूपिण्यै नमः
३ स्वाहा नमः
३ स्वधा नमः
३ अमत्यै नमः

३ मेधायै नमः
३ श्रुत्यै नमः
३ स्मृत्यै नमः ५४०
३ अनुत्तमायै नमः
३ पुण्यकीर्त्यै नमः
३ पुण्यलभ्यायै नमः
३ पुण्यश्रवणकीर्तनायै नमः
३ पुलोमजार्चितायै नमः
३ बन्धमोचन्यै नमः
३ बर्बरालकायै नमः
३ विमर्शरूपिण्यै नमः
३ विद्यायै नमः
३ वियदादिजगत्प्रसुवे नमः ५५०
३ सर्वव्याधिप्रशमन्यै नमः
३ सर्वमृत्युनिवारिण्यै नमः
३ अग्रगण्यायै नमः
३ अचिन्त्यरूपायै नमः
३ कलिकल्मषनाशिन्यै नमः
३ कात्यायन्यै नमः
३ कालहन्त्र्यै नमः
३ कमलाक्षनिषेवितायै नमः
३ ताम्बूलपूरितमुख्यै नमः
३ दाडिमीकुसुमप्रभायै नमः ५६०
३ मृगाक्ष्यै नमः
३ मोहिन्यै नमः
३ मुख्यायै नमः
३ मृडान्यै नमः
३ मित्ररूपिण्यै नमः
३ नित्यतृप्तायै नमः
३ भक्तनिधये नमः
३ नियन्त्र्यै नमः
३ निखिलेश्वर्यै नमः
३ मैत्र्यादिवासनालभ्यायै नमः ५७०
३ महाप्रलयसाक्षिण्यै नमः
३ परस्यै शक्त्यै नमः
३ परायै निष्ठायै नमः
३ प्रज्ञानघनरूपिण्यै नमः
३ माध्वीपानालसायै नमः
३ मत्तायै नमः
३ मातृकावर्णरूपिण्यै नमः
३ महाकैलासनिलयायै नमः
३ मृणालमृदुदोर्लतायै नमः
३ महनीयायै नमः ५८०
३ दयामूर्त्यै नमः
३ महासाम्राज्यशालिन्यै नमः
३ आत्मविद्यायै नमः
३ महाविद्यायै नमः
३ श्रीविद्यायै नमः
३ कामसेवितायै नमः
३ श्रीषोडशाक्षरीविद्यायै नमः
३ त्रिकूटायै नमः
३ कामकोटिकायै नमः
३ कटाक्षकिङ्करीभूतकमला–
कोटिसेवितायै नमः ५९०
३ शिरःस्थितायै नमः
३ चन्द्रनिभायै नमः
३ भालस्थायै नमः
३ इन्द्रधनुःप्रभायै नमः
३ हृदयस्थायै नमः
३ रविप्रख्यायै नमः

३ त्रिकोणान्तरदीपिकायै नमः
३ दाक्षायण्यै नमः
३ दैत्यहन्त्र्यै नमः
३ दक्षयज्ञविनाशिन्यै नमः ६००
३ दरान्दोलितदीर्घाक्ष्यै नमः
३ दरहासोज्ज्वलन्मुख्यै नमः
३ गुरुमूर्त्यै नमः
३ गुणनिधये नमः
३ गोमात्रे नमः
३ गुहजन्मभुवे नमः
३ देवेश्यै नमः
३ दण्डनीतिस्थायै नमः
३ दहराकाशरूपिण्यै नमः
३ प्रतिपन्मुख्यराकान्ततिथि-
मण्डलपूजितायै नमः ६१०
३ कलात्मिकायै नमः
३ कलानाथायै नमः
३ काव्यालापविनोदिन्यै नमः
३ सचामररमावाणीसव्य-
दक्षिणसेवितायै नमः
३ आदिशक्त्यै नमः
३ अमेयायै नमः
३ आत्मने नमः
३ परमायै नमः
३ पावनाकृतये नमः
३ अनेककोटिब्रह्माण्डजनन्यै
नमः ६२०
३ दिव्यविग्रहायै नमः
३ क्लीङ्कार्यै नमः
३ केवलायै नमः
३ गुह्यायै नमः
३ कैवल्यपददायिन्यै नमः
३ त्रिपुरायै नमः
३ त्रिजगद्वन्द्यायै नमः
३ त्रिमूर्तये नमः
३ त्रिदशेश्वर्यै नमः
३ त्र्यक्षर्यै नमः ६३०
३ दिव्यगन्धाढ्यायै नमः
३ सिन्दूरतिलकाञ्चितायै नमः
३ उमायै नमः
३ शैलेन्द्रतनयायै नमः
३ गौर्यै नमः
३ गन्धर्वसेवितायै नमः
३ विश्वगर्भायै नमः
३ स्वर्णगर्भायै नमः
३ अवरदायै नमः
३ वागधीश्वर्यै नमः ६४०
३ ध्यानगम्यायै नमः
३ अपरिच्छेद्यायै नमः
३ ज्ञानदायै नमः
३ ज्ञानविग्रहायै नमः
३ सर्ववेदान्तसंवेद्यायै नमः
३ सत्यानन्दस्वरूपिण्यै नमः
३ लोपामुद्रार्चितायै नमः
३ लीलाकॢप्तब्रह्माण्डमण्डलायै नमः
३ अदृश्यायै नमः
३ दृश्यरहितायै नमः ६५०
३ विज्ञात्र्यै नमः
३ वेद्यवर्जितायै नमः
३ योगिन्यै नमः

३ योगदायै नमः
३ योग्यायै नमः
३ योगानन्दायै नमः
३ युगन्धरायै नमः
३ इच्छाशक्तिज्ञानशक्तिक्रिया–
शक्तिस्वरूपिण्यै नमः
३ सर्वाधारायै नमः
३ सुप्रतिष्ठायै नमः ६६०
३ सदसद्रूपधारिण्यै नमः
३ अष्टमूर्त्यै नमः
३ अजाजेत्र्यै नमः
३ लोकयात्राविधायिन्यै नमः
३ एकाकिन्यै नमः
३ भूमरूपायै नमः
३ निर्द्वैतायै नमः
३ द्वैतवर्जितायै नमः
३ अन्नदायै नमः
३ वसुदायै नमः ६७०
३ वृद्धायै नमः
३ ब्रह्मात्मैक्यस्वरूपिण्यै नमः
३ बृहत्यै नमः
३ ब्राह्मण्यै नमः
३ ब्राह्म्यै नमः
३ ब्रह्मानन्दायै नमः
३ बलिप्रियायै नमः
३ भाषारूपायै नमः
३ बृहत्सेनायै नमः
३ भावाभावविवर्जितायै नमः ६८०
३ सुखाराध्यायै नमः
३ शुभकर्यै नमः
३ शोभनायै सुलभायै गत्यै नमः
३ राजराजेश्वर्यै नमः
३ राज्यदायिन्यै नमः
३ राज्यवल्लभायै नमः
३ राजत्कृपायै नमः
३ राजपीठनिवेशितनिजाश्रितायै नमः
३ राज्यलक्ष्म्यै नमः
३ कोशनाथायै नमः ६९०
३ चतुरङ्गबलेश्वर्यै नमः
३ साम्राज्यदायिन्यै नमः
३ सत्यसन्धायै नमः
३ सागरमेखलायै नमः
३ दीक्षितायै नमः
३ दैत्यशमन्यै नमः
३ सर्वलोकवशङ्कर्यै नमः
३ सर्वार्थदात्र्यै नमः
३ सावित्र्यै नमः
३ सच्चिदानन्दरूपिण्यै
नमः ७००
३ देशकालापरिच्छिन्नायै नमः
३ सर्वगायै नमः
३ सर्वमोहिन्यै नमः
३ सरस्वत्यै नमः
३ शास्त्रमय्यै नमः
३ गुहाम्बायै नमः
३ गुह्यरूपिण्यै नमः
३ सर्वोपाधिविनिर्मुक्तायै नमः
३ सदाशिवपतिव्रतायै नमः
३ सम्प्रदायेश्वर्यै नमः ७१०
३ साध्व्यै नमः

३ यै नमः
३ गुरुमण्डलरूपिण्यै नमः
३ कुलोत्तीर्णायै नमः
३ भगाराध्यायै नमः
३ मायायै नमः
३ मधुमत्यै नमः
३ मह्यै नमः
३ गणाम्बायै नमः
३ गुह्यकाराध्यायै नमः ७२०
३ कोमलाङ्ग्यै नमः
३ गुरुप्रियायै नमः
३ स्वतन्त्रायै नमः
३ सर्वतन्त्रेश्यै नमः
३ दक्षिणामूर्तिरूपिण्यै नमः
३ सनकादिसमाराध्यायै नमः
३ शिवज्ञानप्रदायिन्यै नमः
३ चित्कलायै नमः
३ आनन्दकलिकायै नमः
३ प्रेमरूपायै नमः ७३०
३ प्रियङ्कर्यै नमः
३ नामपारायणप्रीतायै नमः
३ नन्दिविद्यायै नमः
३ नटेश्वर्यै नमः
३ मिथ्याजगदधिष्ठानायै नमः
३ मुक्तिदायै नमः
३ मुक्तिरूपिण्यै नमः
३ लास्यप्रियायै नमः
३ लयकर्यै नमः
३ लज्जायै नमः ७४०
३ रम्भादिवन्दितायै नमः
३ भवदावसुधावृष्ट्यै नमः
३ पापारण्यदवानलायै नमः
३ दौर्भाग्यतूलवातूलायै नमः
३ जराध्वान्तरविप्रभायै नमः
३ भाग्याब्धिचन्द्रिकायै नमः
३ भक्तचित्तकेकिघनाघनायै नमः
३ रोगपर्वतदम्भोलये नमः
३ मृत्युदारुकुठारिकायै नमः
३ महेश्वर्यै नमः ७५०
३ महाकाल्यै नमः
३ महाग्रासायै नमः
३ महाशनायै नमः
३ अपर्णायै नमः
३ चण्डिकायै नमः
३ चण्डमुण्डासुरनिषूदिन्यै नमः
३ क्षराक्षरात्मिकायै नमः
३ सर्वलोकेश्यै नमः
३ विश्वधारिण्यै नमः
३ त्रिवर्गदात्र्यै नमः ७६०
३ सुभगायै नमः
३ त्र्यम्बकायै नमः
३ त्रिगुणात्मिकायै नमः
३ स्वर्गापवर्गदायै नमः
३ शुद्धायै नमः
३ जपापुष्पनिभाकृतये नमः
३ ओजोवत्यै नमः
३ द्युतिधरायै नमः
३ यज्ञरूपायै नमः
३ प्रियव्रतायै नमः ७७०
३ दुराराध्यायै नमः

३ दुराधर्षायै नमः
३ पाटलीकुसुमप्रियायै नमः
३ महत्यै नमः
३ मेरुनिलयायै नमः
३ मन्दारकुसुमप्रियायै नमः
३ वीराराध्यायै नमः
३ विराड्रूपायै नमः
३ विरजसे नमः
३ विश्वतोमुख्यै नमः ७८०
३ प्रत्यग्रूपायै नमः
३ पराकाशायै नमः
३ प्राणदायै नमः
३ प्राणरूपिण्यै नमः
३ मार्तण्डभैरवाराध्यायै नमः
३ मन्त्रिणीन्यस्तराज्यधुरे नमः
३ त्रिपुरेश्यै नमः
३ जयत्सेनायै नमः
३ निस्त्रैगुण्यायै नमः
३ परापरायै नमः ७९०
३ सत्यज्ञानानन्दरूपायै नमः
३ सामरस्यपरायणायै नमः
३ कपर्दिन्यै नमः
३ कलामालायै नमः
३ कामदुहे नमः
३ कामरूपिण्यै नमः
३ कलानिधये नमः
३ काव्यकलायै नमः
३ रसज्ञायै नमः
३ रसशेवधये नमः ८००
३ पुष्टायै नमः
३ पुरातनायै नमः
३ पूज्यायै नमः
३ पुष्करायै नमः
३ पुष्करेक्षणायै नमः
३ परस्मै ज्योतिषे नमः
३ परस्मै धाम्ने नमः
३ परमाणवे नमः
३ परात्परायै नमः
३ पाशहस्तायै नमः ८१०
३ पाशहन्त्र्यै नमः
३ परमन्त्रविभेदिन्यै नमः
३ मूर्तायै नमः
३ अमूर्तायै नमः
३ अनित्यतृप्तायै नमः
३ मुनिमानसहंसिकायै नमः
३ सत्यव्रतायै नमः
३ सत्यरूपायै नमः
३ सर्वान्तर्यामिन्यै नमः
३ सत्यै नमः ८२०
३ ब्रह्माण्यै नमः
३ ब्रह्मणे नमः
३ जनन्यै नमः
३ बहुरूपायै नमः
३ बुधार्चितायै नमः
३ प्रसवित्र्यै नमः
३ प्रचण्डायै नमः
३ आज्ञायै नमः
३ प्रतिष्ठायै नमः
३ प्रकटाकृतये नमः ८३०
३ प्राणेश्वर्यै नमः

३ प्राणदात्र्यै नमः
३ पञ्चाशत्पीठरूपिण्यै नमः
३ विशृङ्खलायै नमः
३ विविक्तस्थायै नमः
३ वीरमात्रे नमः
३ वियत्प्रसुवे नमः
३ मुकुन्दायै नमः
३ मुक्तिनिलयायै नमः
३ मूलविग्रहरूपिण्यै नमः ८४०
३ भावज्ञायै नमः
३ भवरोगघ्न्यै नमः
३ भवचक्रप्रवर्तिन्यै नमः
३ छन्दःसारायै नमः
३ शास्त्रसारायै नमः
३ मन्त्रसारायै नमः
३ तलोदर्यै नमः
३ उदारकीर्तये नमः
३ उद्दामवैभवायै नमः
३ वर्णरूपिण्यै नमः ८५०
३ जन्ममृत्युजरातप्तजन–
विश्रान्तिदायिन्यै नमः
३ सर्वोपनिषदुद्धुष्टायै नमः
३ शान्त्यतीतकलात्मिकायै नमः
३ गम्भीरायै नमः
३ गगनान्तस्थायै नमः
३ गर्वितायै नमः
३ गानलोलुपायै नमः
३ कल्पनारहितायै नमः
३ काष्ठायै नमः
३ अकान्तायै नमः ८६०
३ कान्तार्धविग्रहायै नमः
३ कार्यकारणनिर्मुक्तायै नमः
३ कामकेलितरङ्गितायै नमः
३ कनत्कनकताटङ्कायै नमः
३ लीलाविग्रहधारिण्यै नमः
३ अजायै नमः
३ क्षयविनिर्मुक्तायै नमः
३ मुग्धायै नमः
३ क्षिप्रप्रसादिन्यै नमः
३ अन्तर्मुखसमाराध्यायै
नमः ८७०
३ बहिर्मुखसुदुर्लभायै नमः
३ त्रय्यै नमः
३ त्रिवर्गनिलयायै नमः
३ त्रिस्थायै नमः
३ त्रिपुरमालिन्यै नमः
३ निरामयायै नमः
३ निरालम्बायै नमः
३ स्वात्मारामायै नमः
३ सुधास्रुत्यै नमः
३ संसारपङ्कनिर्मग्नसमुद्धरण–
पण्डितायै नमः ८८०
३ यज्ञप्रियायै नमः
३ यज्ञकर्त्र्यै नमः
३ यजमानस्वरूपिण्यै नमः
३ धर्माधारायै नमः
३ धनाध्यक्षायै नमः
३ धनधान्यविवर्धिन्यै नमः
३ विप्रप्रियायै नमः
३ विप्ररूपायै नमः

३ विश्वभ्रमणकारिण्यै नमः
३ विश्वग्रासायै नमः ८९०
३ विद्रुमाभायै नमः
३ वैष्णव्यै नमः
३ विष्णुरूपिण्यै नमः
३ अयोन्यै नमः
३ योनिनिलयायै नमः
३ कूटस्थायै नमः
३ कुलरूपिण्यै नमः
३ वीरगोष्ठीप्रियायै नमः
३ वीरायै नमः
३ नैष्कर्म्यायै नमः ९००
३ नादरूपिण्यै नमः
३ विज्ञानकलनायै नमः
३ कल्यायै नमः
३ विदग्धायै नमः
३ बैन्दवासनायै नमः
३ तत्त्वाधिकायै नमः
३ तत्त्वमय्यै नमः
३ तत्त्वमर्थस्वरूपिण्यै नमः
३ सामगानप्रियायै नमः
३ सौम्यायै नमः ९१०
३ सदाशिवकुटुम्बिन्यै नमः
३ सव्यापसव्यमार्गस्थायै नमः
३ सर्वापद्विनिवारिण्यै नमः
३ स्वस्थायै नमः
३ स्वभावमधुरायै नमः
३ धीरायै नमः
३ धीरसमर्चितायै नमः
३ चैतन्यार्घ्यसमाराध्यायै नमः
३ चैतन्यकुसुमप्रियायै नमः
३ सदोदितायै नमः ९२०
३ सदातुष्टायै नमः
३ तरुणादित्यपाटलायै नमः
३ दक्षिणादक्षिणाराध्यायै नमः
३ दरस्मेरमुखाम्बुजायै नमः
३ कौलिनीकेवलायै नमः
३ अनर्घ्यकैवल्यपददायिन्यै नमः
३ स्तोत्रप्रियायै नमः
३ स्तुतिमत्यै नमः
३ श्रुतिसंस्तुतवैभवायै नमः
३ मनस्विन्यै नमः ९३०
३ मानवत्यै नमः
३ महेश्यै नमः
३ मङ्गलाकृतये नमः
३ विश्वमात्रे नमः
३ जगद्धात्र्यै नमः
३ विशालाक्ष्यै नमः
३ विरागिण्यै नमः
३ प्रगल्भायै नमः
३ परमोदारायै नमः
३ परमोदायै नमः ९४०
३ मनोमय्यै नमः
३ व्योमकेश्यै नमः
३ विमानस्थायै नमः
३ वज्रिण्यै नमः
३ वामकेश्वर्यै नमः
३ पञ्चयज्ञप्रियायै नमः
३ पञ्चप्रेतमञ्चाधिशायिन्यै नमः
३ पञ्चम्यै नमः

३ पञ्चभूतेश्यै नमः
३ पञ्चसङ्ख्योपचारिण्यै नमः ९५०
३ शाश्वत्यै नमः
३ शाश्वतैश्वर्यायै नमः
३ शर्मदायै नमः
३ शम्भुमोहिन्यै नमः
३ धरायै नमः
३ धरसुतायै नमः
३ धन्यायै नमः
३ धर्मिण्यै नमः
३ धर्मवर्धिन्यै नमः
३ लोकातीतायै नमः ९६०
३ गुणातीतायै नमः
३ सर्वातीतायै नमः
३ शमात्मिकायै नमः
३ बन्धूककुसुमप्रख्यायै नमः
३ बालायै नमः
३ लीलाविनोदिन्यै नमः
३ सुमङ्गल्यै नमः
३ सुखकर्यै नमः
३ सुवेषाढ्यायै नमः
३ सुवासिन्यै नमः ९७०
३ सुवासिन्यर्चनप्रीतायै नमः
३ आशोभनायै नमः
३ शुद्धमानसायै नमः
३ बिन्दुतर्पणसन्तुष्टायै नमः
३ पूर्वजायै नमः
३ त्रिपुराम्बिकायै नमः
३ दशमुद्रासमाराध्यायै नमः
३ त्रिपुराश्रीवशङ्कर्यै नमः
३ ज्ञानमुद्रायै नमः
३ ज्ञानगम्यायै नमः ९८०
३ ज्ञानज्ञेयस्वरूपिण्यै नमः
३ योनिमुद्रायै नमः
३ त्रिखण्डेश्यै नमः
३ त्रिगुणायै नमः
३ अम्बायै नमः
३ त्रिकोणगायै नमः
३ अनघायै नमः
३ अद्भुतचारित्रायै नमः
३ वाञ्छितार्थप्रदायिन्यै नमः
३ अभ्यासातिशयज्ञातायै नमः ९९०
३ षडध्वातीतरूपिण्यै नमः
३ अव्याजकरुणामूर्तये नमः
३ अज्ञानध्वान्तदीपिकायै नमः
३ आबालगोपविदितायै नमः
३ सर्वानुल्लङ्घ्यशासनायै नमः
३ श्रीचक्रराजनिलयायै नमः
३ श्रीमत्त्रिपुरसुन्दर्यै नमः
३ श्रीशिवायै नमः
३ शिवशक्त्यैक्यरूपिण्यै नमः
३ श्रीललिताम्बिकायै– नमः १०००

**पुनरपि पूर्ववत् न्यासध्यानादिकं कुर्यात्।**

*इति श्रीललितासहस्रनामावलिः सम्पूर्णा।*

# श्रीललिताष्टोत्तरशतनामावलिः

ऐं ह्रीं श्रीं

ऐं ह्रीं श्रीं रजताचलशृङ्गाग्रमध्यस्थायै नमः १
ऐं ह्रीं श्रीं हिमाचलमहांवशपावनायै नमः २
ऐं ह्रीं श्रीं शङ्करार्धाङ्गसौन्दर्यशरीरायै नमः ३
ऐं ह्रीं श्रीं लसन्मरकतस्वच्छविग्रहायै नमः ४
ऐं ह्रीं श्रीं महातिशयसौन्दर्यलावण्यायै नमः ५
ऐं ह्रीं श्रीं शशाङ्कशेखरप्राणवल्लभायै नमः ६
ऐं ह्रीं श्रीं सदापञ्चदशात्मैक्यस्वरूपायै नमः ७
ऐं ह्रीं श्रीं वज्रमाणिक्यकटककिरीटायै नमः ८
ऐं ह्रीं श्रीं कस्तूरीतिलकोल्लासिनिटिलायै नमः ९
ऐं ह्रीं श्रीं भस्मरेखाङ्कितलसन्मस्तकायै नमः १०
ऐं ह्रीं श्रीं विकचाम्भोरुहदललोचनायै नमः ११
ऐं ह्रीं श्रीं शरच्चाम्पेयपुष्पाभनासिकायै नमः १२
ऐं ह्रीं श्रीं लसत्काञ्चनताटङ्कयुगलायै नमः १३
ऐं ह्रीं श्रीं मणिदर्पणसङ्काशकपोलायै नमः १४
ऐं ह्रीं श्रीं ताम्बूलपूरितस्मेरवदनायै नमः १५
ऐं ह्रीं श्रीं सुपक्वदाडिमीबीजरदनायै नमः १६
ऐं ह्रीं श्रीं कम्बुपूगसमच्छायकन्धरायै नमः १७
ऐं ह्रीं श्रीं स्थूलमुक्ताफलोदारसुहारायै नमः १८
ऐं ह्रीं श्रीं गिरीशबद्धमाङ्गल्यमङ्गलायै नमः १९
ऐं ह्रीं श्रीं पद्मपाशाङ्कुशलसत्कराब्जायै नमः २०
ऐं ह्रीं श्रीं पद्मकैरवमन्दारसुमालिन्यै नमः २१
ऐं ह्रीं श्रीं सुवर्णकुम्भयुग्माभसुकुचायै नमः २२

ऐं ह्लीं श्रीं रमणीयचतुर्बाहुसंयुक्तायै नमः २३
ऐं ह्लीं श्रीं कनकाङ्गदकेयूरभूषितायै नमः २४
ऐं ह्लीं श्रीं बृहत्सौवर्णसौन्दर्यवसनायै नमः २५
ऐं ह्लीं श्रीं बृहन्नितम्बविलसज्जघनायै नमः २६
ऐं ह्लीं श्रीं सौभाग्यजातशृङ्गारमध्यमायै नमः २७
ऐं ह्लीं श्रीं दिव्यभूषणसन्दोहरञ्जितायै नमः २८
ऐं ह्लीं श्रीं पारिजातगुणाधिक्यपदाब्जायै नमः २९
ऐं ह्लीं श्रीं सुपद्मरागसङ्काशचरणायै नमः ३०
ऐं ह्लीं श्रीं कामकोटिमहापद्मपीठस्थायै नमः ३१
ऐं ह्लीं श्रीं श्रीकण्ठनेत्रकुमुदचन्द्रिकायै नमः ३२
ऐं ह्लीं श्रीं सचामररमावाणीवीजितायै नमः ३३
ऐं ह्लीं श्रीं भक्तरक्षणदाक्षिण्यकटाक्षायै नमः ३४
ऐं ह्लीं श्रीं भूतेशालिङ्गनोद्भूतपुलकाङ्ग्यै नमः ३५
ऐं ह्लीं श्रीं अनङ्गजनकापाङ्गवीक्षणायै नमः ३६
ऐं ह्लीं श्रीं ब्रह्मोपेन्द्रशिरोरत्नरञ्जितायै नमः ३७
ऐं ह्लीं श्रीं शचीमुख्यामरवधूसेवितायै नमः ३८
ऐं ह्लीं श्रीं लीलाकल्पितब्रह्माण्डमण्डलायै नमः ३९
ऐं ह्लीं श्रीं अमृतादिमहाशक्तिसंवृतायै नमः ४०
ऐं ह्लीं श्रीं एकातपत्रसाम्राज्यदायिकायै नमः ४१
ऐं ह्लीं श्रीं सनकादिसमाराध्यपादुकायै नमः ४२
ऐं ह्लीं श्रीं देवर्षिभिः स्तूयमानवैभवायै नमः ४३
ऐं ह्लीं श्रीं कलशोद्भवदुर्वासःपूजितायै नमः ४४
ऐं ह्लीं श्रीं मत्तेभवक्त्रषड्वक्त्रवत्सलायै नमः ४५
ऐं ह्लीं श्रीं चक्रराजमहायन्त्रमध्यवर्तिन्यै नमः ४६
ऐं ह्लीं श्रीं चिदग्निकुण्डसम्भूतसुदेहायै नमः ४७

ऐं ह्रीं श्रीं शशाङ्कखण्डसम्भूतसुदेहायै नमः ४८
ऐं ह्रीं श्रीं मत्तहंसवधूमन्दगमनायै नमः ४९
ऐं ह्रीं श्रीं वन्दारुजनसन्दोहवन्दितायै नमः ५०
ऐं ह्रीं श्रीं अन्तर्मुखजनानन्दफलदायै नमः ५१
ऐं ह्रीं श्रीं पतिव्रताङ्गनाभीष्टफलदायै नमः ५२
ऐं ह्रीं श्रीं अव्याजकरुणापूरपूरितायै नमः ५३
ऐं ह्रीं श्रीं नितान्तसच्चिदानन्दसंयुक्तायै नमः ५४
ऐं ह्रीं श्रीं सहस्रसूर्यसंयुक्तप्रकाशायै नमः ५५
ऐं ह्रीं श्रीं रत्नचिन्तामणिगृहमध्यस्थायै नमः ५६
ऐं ह्रीं श्रीं हानिवृद्धिगुणाधिक्यरहितायै नमः ५७
ऐं ह्रीं श्रीं महापद्माटवीमध्यनिवासायै नमः ५८
ऐं ह्रीं श्रीं जाग्रत्स्वप्नसुषुप्तीनां साक्षिभूत्यै नमः ५९
ऐं ह्रीं श्रीं महापापौघपापानां विनाशिन्यै नमः ६०
ऐं ह्रीं श्रीं दुष्टभीतिमहाभीतिभञ्जनायै नमः ६१
ऐं ह्रीं श्रीं समस्तदेवदनुजप्रेरिकायै नमः ६२
ऐं ह्रीं श्रीं समस्तहृदयाम्भोजनिलयायै नमः ६३
ऐं ह्रीं श्रीं अनाहतमहापद्ममन्दिरायै नमः ६४
ऐं ह्रीं श्रीं सहस्रारसरोजातवासितायै नमः ६५
ऐं ह्रीं श्रीं पुनरावृत्तिरहितपुरस्थायै नमः ६६
ऐं ह्रीं श्रीं वाणीवरदगायत्रीसन्नुतायै नमः ६७
ऐं ह्रीं श्रीं रमाभूमिसुताराध्यपदाब्जायै नमः ६८
ऐं ह्रीं श्रीं लोपामुद्रार्चितश्रीमच्चरणायै नमः ६९
ऐं ह्रीं श्रीं सहस्ररतिसौन्दर्यशरीरायै नमः ७०
ऐं ह्रीं श्रीं भावनामात्रसन्तुष्टहृदयायै नमः ७१
ऐं ह्रीं श्रीं सत्यसम्पूर्णविज्ञानसिद्धिदायै नमः ७२

ऐं ह्रीं श्रीं श्रीलोचनकृतोल्लासफलदायै नमः ७३
ऐं ह्रीं श्रीं श्रीसुधाब्धिमणिद्वीपमध्यगायै नमः ७४
ऐं ह्रीं श्रीं दक्षाध्वरविनिर्भेदसाधनायै नमः ७५
ऐं ह्रीं श्रीं श्रीनाथसोदरीभूतशोभितायै नमः ७६
ऐं ह्रीं श्रीं चन्द्रशेखरभक्तार्तिभञ्जनायै नमः ७७
ऐं ह्रीं श्रीं सर्वोपाधिविनिर्मुक्तचैतन्यायै नमः ७८
ऐं ह्रीं श्रीं नामपारायणाभीष्टफलदायै नमः ७९
ऐं ह्रीं श्रीं सृष्टिस्थितितिरोधानसङ्कल्पायै नमः ८०
ऐं ह्रीं श्रीं श्रीषोडशाक्षरीमन्त्रमध्यगायै नमः ८१
ऐं ह्रीं श्रीं अनाद्यन्तस्वयम्भूतदिव्यमूर्त्यै नमः ८२
ऐं ह्रीं श्रीं भक्तहंसपरीमुख्यवियोगायै नमः ८३
ऐं ह्रीं श्रीं मातृमण्डलसंयुक्तललितायै नमः ८४
ऐं ह्रीं श्रीं भण्डदैत्यमहासत्त्वनाशनायै नमः ८५
ऐं ह्रीं श्रीं क्रूरभण्डशिरश्छेदनिपुणायै नमः ८६
ऐं ह्रीं श्रीं धात्रच्युतसुराधीशसुखदायै नमः ८७
ऐं ह्रीं श्रीं चण्डमुण्डनिशुम्भादिखण्डनायै नमः ८८
ऐं ह्रीं श्रीं रक्ताक्षरक्तजिह्वादिशिक्षणायै नमः ८९
ऐं ह्रीं श्रीं महिषासुरदोवीर्यनिग्रहायै नमः ९०
ऐं ह्रीं श्रीं अभ्रकेशमहोत्साहकारणायै नमः ९१
ऐं ह्रीं श्रीं महेशयुक्तनटनतत्परायै नमः ९२
ऐं ह्रीं श्रीं निजभर्तृमुखाम्भोजचिन्तनायै नमः ९३
ऐं ह्रीं श्रीं वृषभध्वजविज्ञानभावनायै नमः ९४
ऐं ह्रीं श्रीं जन्ममृत्युजरारोगभञ्जनायै नमः ९५
ऐं ह्रीं श्रीं विधेयमुक्तविज्ञानसिद्धिदायै नमः ९६
ऐं ह्रीं श्रीं कामक्रोधादिषड्वर्गनाशनायै नमः ९७

ऐं ह्रीं श्रीं राजराजार्चितपदसरोजायै नमः ९८
ऐं ह्रीं श्रीं सर्ववेदान्तसंसिद्धसुतत्त्वायै नमः ९९
ऐं ह्रीं श्रीं श्रीवीरभक्तविज्ञाननिधानायै नमः १००
ऐं ह्रीं श्रीं अशेषदुष्टदनुजसूदनायै नमः १०१
ऐं ह्रीं श्रीं साक्षाच्छ्रीदक्षिणामूर्तिमनोज्ञायै नमः १०२
ऐं ह्रीं श्रीं हयमेधाग्रसम्पूज्यमहिमायै नमः १०३
ऐं ह्रीं श्रीं दक्षप्रजापतिसुरवेषाढ्यायै नमः १०४
ऐं ह्रीं श्रीं सुमबाणेक्षुकोदण्डमण्डितायै नमः १०५
ऐं ह्रीं श्रीं नित्ययौवनमाङ्गल्यमङ्गलायै नमः १०६
ऐं ह्रीं श्रीं महादेवसमायुक्तशरीरायै नमः १०७
ऐं ह्रीं श्रीं महादेवरतौत्सुक्यमहादेव्यै नमः १०८

*।। श्रीललिताष्टोत्तरशतनामावलिः सम्पूर्णा।।*

# श्रीललितात्रिशतीस्तोत्ररत्ननामावलिः

अस्य श्रीललितात्रिशतीस्तोत्रमालामन्त्रस्य हयग्रीवऋषये नमः (शिरसि) अनुष्टुप्छन्दसे नमः (मुखे), श्रीललिताम्बादेवतायै नमः (हृदये), ३ क०५ बीजाय नमः (गुह्ये), ३ स० ४ शक्तये नमः (पादयोः) ३ ह० ६ कीलकाय नमः (नाभौ) श्रीललिताम्बाप्रसादसिद्धये पूजने विनियोगाय नमः (सर्वाङ्गे)। कूटत्रयं द्विरावृत्त्या बालया वा षडङ्गद्वयम्।

अथ ध्यानम्

अतिमधुरचापहस्तामपरिमितामोदबाणसौभाग्याम्।
अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे।। १।।

(लमिति पञ्चोपचारैः सम्पूज्य-)

## श्रीललितात्रिशतीस्तोत्ररत्ननामावलिः

ऐं ह्रीं श्रीं

ऐं ह्रीं श्रीं ककाररूपायै नमः
३ कल्याण्यै नमः
३ कल्याणगुणशालिन्यै नमः
३ कल्याणशैलनिलयायै नमः
३ कमनीयायै नमः
३ कलावत्यै नमः
३ कमलाक्ष्यै नमः
३ कल्मषघ्न्यै नमः
३ करुणामृतसागरायै नमः
३ कदम्बकाननावासायै नमः १०
३ कदम्बकुसुमप्रियायै नमः
३ कन्दर्पविद्यायै नमः
३ कन्दर्पजनकापाङ्गवीक्षणायै नमः
३ कर्पूरवीटीसौरभ्यकल्लोलित-
ककुप्तटायै नमः
३ कलिदोषहरायै नमः
३ कञ्जलोचनायै नमः
३ कम्रविग्रहायै नमः
३ कर्मादिसाक्षिण्यै नमः
३ कारयित्र्यै नमः
३ कर्मफलप्रदायै नमः २०
३ एकाररूपायै नमः
३ एकाक्षर्यै नमः
३ एकानेकाक्षराकृत्यै नमः
३ एतत्तदित्यनिर्देश्यायै नमः
३ एकानन्दचिदाकृत्यै नमः
३ एवमित्यागमाबोध्यायै नमः
३ एकभक्तिमदर्चितायै नमः
३ एकाग्रचित्तनिर्ध्यातायै नमः
३ एषणारहितादृतायै नमः
३ एलासुगन्धिचिकुरायै नमः ३०
३ एनःकूटविनाशिन्यै नमः
३ एकभोगायै नमः
३ एकरसायै नमः
३ एकैश्वर्यप्रदायिन्यै नमः
३ एकातपत्रसाम्राज्यप्रदायै नमः
३ एकान्तपूजितायै नमः
३ एधमानप्रभायै नमः
३ एजदनेकजगदीश्वर्यै नमः
३ एकवीरादिसंसेव्यायै नमः
३ एकप्राभवशालिन्यै नमः ४०
३ ईकाररूपायै नमः
३ ईशित्र्यै नमः
३ ईप्सितार्थप्रदायिन्यै नमः
३ ईदृगित्यविनिर्देश्यायै नमः
३ ईश्वरत्वविधायिन्यै नमः
३ ईशानादिब्रह्ममय्यै नमः
३ ईशित्वाद्यष्टसिद्धिदायै नमः
३ ईक्षित्र्यै नमः
३ ईक्षणसृष्टाण्डकोट्यै नमः
३ ईश्वरवल्लभायै नमः
३ ईडितायै नमः ५०
३ ईश्वरार्धाङ्गशरीरायै नमः
३ ईशाधिदेवतायै नमः

३ ईश्वरप्रेरणकर्यै नमः
३ ईशताण्डवसाक्षिण्यै नमः
३ ईश्वरोत्सङ्गनिलयायै नमः
३ ईतिबाधाविनाशिन्यै नमः
३ ईहाविरहितायै नमः
३ ईशशक्त्यै नमः
३ ईषत्स्मिताननायै नमः
३ लकाररूपायै नमः ६०
३ ललितायै नमः
३ लक्ष्मीवाणीनिषेवितायै नमः
३ लाकिन्यै नमः
३ ललनारूपायै नमः
३ लसद्दाडिमपाटलायै नमः
३ ललन्तिकालसत्फालायै नमः
३ ललाटनयनार्चितायै नमः
३ लक्षणोज्ज्वलदिव्याङ्ग्यै नमः
३ लक्षकोट्यण्डनायिकायै नमः:७०
३ लक्ष्यार्थायै नमः
३ लक्षणागम्यायै नमः
३ लब्धकामायै नमः
३ लतातनवे नमः
३ ललामराजदलिकायै नमः
३ लम्बिमुक्तालताञ्चितायै नमः
३ लम्बोदरप्रसुवे नमः
३ लभ्यायै नमः
३ लज्जाढ्यायै नमः
३ लयवर्जितायै नमः ८०
३ ह्रीङ्काररूपायै नमः
३ ह्रीङ्कारनिलयायै नमः
३ ह्रीम्पदप्रियायै नमः
३ ह्रीङ्कारबीजायै नमः
३ ह्रीङ्कारमन्त्रायै नमः
३ ह्रीङ्कारलक्षणायै नमः
३ ह्रीङ्कारजपसुप्रीतायै नमः
३ ह्रीम्मत्यै नमः
३ ह्रींविभूषणायै नमः
३ ह्रींशीलायै नमः:९०
३ ह्रीम्पदाराध्यायै नमः
३ ह्रीङ्गर्भायै नमः
३ ह्रीम्पदाभिधायै नमः
३ ह्रीङ्कारवाच्यायै नमः
३ ह्रीङ्कारपूज्यायै नमः
३ ह्रीङ्कारपीठिकायै नमः
३ ह्रीङ्कारवेद्यायै नमः
३ ह्रीङ्कारचिन्त्यायै नमः
३ ह्रींरूपायै नमः
३ ह्रींशरीरिण्यै नमः १००
३ हकाररूपायै नमः
३ हलधृक्पूजितायै नमः
३ हरिणेक्षणायै नमः
३ हरिप्रियायै नमः
३ हराराध्यायै नमः
३ हरिब्रह्मेन्द्रवन्दितायै नमः
३ हयारूढासेविताङ्घ्र्यै नमः
३ हयमेधसमर्चितायै नमः
३ हर्यक्षवाहनायै नमः
३ हंसवाहनायै नमः ११०
३ हतदानवायै नमः

३ हत्यादिपापशमन्यै नमः
३ हरिदश्वादिसेवितायै नमः
३ हस्तिकुम्भोत्तुङ्गकुचायै नमः
३ हस्तिकृत्तिप्रियाङ्गनायै नमः
३ हरिद्राकुङ्कुमादिग्धायै नमः
३ हर्यश्वाद्यमरार्चितायै नमः
३ हरिकेशसख्यै नमः
३ हादिविद्यायै नमः
३ हालामदालसायै नमः १२०
३ सकाररूपायै नमः
३ सर्वज्ञायै नमः
३ सर्वेश्यै नमः
३ सर्वमङ्गलायै नमः
३ सर्वकर्त्र्यै नमः
३ सर्वभर्त्र्यै नमः
३ सर्वहन्त्र्यै नमः
३ सनातन्यै नमः
३ सर्वानवद्यायै नमः
३ सर्वाङ्गसुन्दर्यै नमः १३०
३ सर्वसाक्षिण्यै नमः
३ सर्वात्मिकायै नमः
३ सर्वसौख्यदात्र्यै नमः
३ सर्वविमोहिन्यै नमः
३ सर्वाधारायै नमः
३ सर्वगतायै नमः
३ सर्वावगुणवर्जितायै नमः
३ सर्वारुणायै नमः
३ सर्वमात्रे नमः
३ सर्वभूषणभूषितायै नमः १४०

३ ककारार्थायै नमः
३ कालहन्त्र्यै नमः
३ कामेश्यै नमः
३ कामितार्थदायै नमः
३ कामसञ्जीवन्यै नमः
३ कल्यायै नमः
३ कठिनस्तनमण्डलायै नमः
३ करभोरवे नमः
३ कलानाथमुख्यै नमः
३ कचजिताम्बुदायै नमः १५०
३ कटाक्षस्यन्दिकरुणायै नमः
३ कपालिप्राणनायिकायै नमः
३ कारुण्यविग्रहायै नमः
३ कान्तायै नमः
३ कान्तिधूतजपावल्यै नमः
३ कलालापायै नमः
३ कम्बुकण्ठ्यै नमः
३ करनिर्जितपल्लवायै नमः
३ कल्पवल्लीसमभुजायै नमः
३ कस्तूरीतिलकाञ्चितायै नमः १६०
३ हकारार्थायै नमः
३ हंसगत्यै नमः
३ हाटकाभरणोज्ज्वलायै नमः
३ हारहारिकुचाभोगायै नमः
३ हाकिन्यै नमः
३ हल्यवर्जितायै नमः
३ हरित्पतिसमाराध्यायै नमः
३ हठात्कारहतासुरायै नमः
३ हर्षप्रदायै नमः

३ हविर्भोक्त्र्यै नमः १७०
३ हार्दसन्तमसापहायै नमः
३ हल्लीसलास्यसन्तुष्टायै नमः
३ हंसमन्त्रार्थरूपिण्यै नमः
३ हानोपादाननिर्मुक्तायै नमः
३ हर्षिण्यै नमः
३ हरिसोदर्यै नमः
३ हाहाहूहूमुखस्तुत्यायै नमः
३ हानिवृद्धिविवर्जितायै नमः
३ हय्यङ्गवीनहृदयायै नमः
३ हरिगोपारुणांशुकायै नमः १८०
३ लकाराख्यायै नमः
३ लतापूज्यायै नमः
३ लयस्थित्युद्भवेश्वर्यै नमः
३ लास्यदर्शनसन्तुष्टायै नमः
३ लाभालाभविवर्जितायै नमः
३ लङ्घ्येतराज्ञायै नमः
३ लावण्यशालिन्यै नमः
३ लघुसिद्धिदायै नमः
३ लाक्षारससवर्णाभायै नमः
३ लक्ष्मणाग्रजपूजितायै नमः १९०
३ लभ्येतरायै नमः
३ लब्धभक्तिसुलभायै नमः
३ लाङ्गलायुधायै नमः
३ लग्नचामरहस्तश्रीशारदा-
परिवीजितायै नमः
३ लज्जापदसमाराध्यायै नमः
३ लम्पटायै नमः
३ लकुलेश्वर्यै नमः
३ लब्धमानायै नमः
३ लब्धरसायै नमः
३ लब्धसम्पत्समुन्नत्यै २००
३ ह्रीङ्कारिण्यै नमः
३ ह्रीङ्काराद्यायै नमः
३ ह्रीम्मध्यायै नमः
३ ह्रींशिखामण्यै नमः
३ ह्रीङ्कारकुण्डाग्निशिखायै नमः
३ ह्रीङ्कारशशिचन्द्रिकायै नमः
३ ह्रीङ्कारभास्कररुच्यै नमः
३ ह्रीङ्काराम्भोदचञ्चलायै नमः
३ ह्रीङ्कारकन्दाङ्कुरिकायै नमः
३ ह्रीङ्कारैकपरायणायै नमः २१०
३ ह्रीङ्कारदीर्घिकाहंस्यै नमः
३ ह्रीङ्कारोद्यानकेकिन्यै नमः
३ ह्रीङ्कारारण्यहरिण्यै नमः
३ ह्रीङ्कारावालवल्ल्यै नमः
३ ह्रीङ्कारपञ्जरशुक्यै नमः
३ ह्रीङ्काराङ्गणदीपिकायै नमः
३ ह्रीङ्कारकन्दरासिंह्यै नमः
३ ह्रीङ्काराम्भोजभृङ्गिकायै नमः
३ ह्रीङ्कारसुमनोमाधव्यै नमः
३ ह्रीङ्कारतरुमञ्जर्यै नमः २२०
३ सकाराख्यायै नमः
३ समरसायै नमः
३ सकलागमसंस्तुतायै नमः
३ सर्ववेदान्ततात्पर्यभूम्यै नमः
३ सदसदाश्रयायै नमः
३ सकलायै नमः

३ सच्चिदानन्दायै नमः
३ साध्व्यै नमः
३ सद्गतिदायिन्यै नमः
३ सनकादिमुनिध्येयायै २३०
३ सदाशिवकुटुम्बिन्यै नमः
३ सकलाधिष्ठानरूपायै नमः
३ सत्यरूपायै नमः
३ समाकृत्यै नमः
३ सर्वप्रपञ्चनिर्मात्र्यै नमः
३ समानाधिकवर्जितायै नमः
३ सर्वोत्तुङ्गायै नमः
३ सङ्गहीनायै नमः
३ सगुणायै नमः
३ सकलेष्टदायै नमः २४०
३ ककारिण्यै नमः
३ काव्यलोलायै नमः
३ कामेश्वरमनोहरायै नमः
३ कामेश्वरप्राणनाड्यै नमः
३ कामेशोत्सङ्गवासिन्यै नमः
३ कामेश्वरालिङ्गिताङ्ग्यै नमः
३ कामेश्वरसुखप्रदायै नमः
३ कामेश्वरप्रणयिन्यै नमः
३ कामेश्वरविलासिन्यै नमः
३ कामेश्वरतपस्सिद्ध्यै नमः २५०
३ कामेश्वरमनःप्रियायै नमः
३ कामेश्वरप्राणनाथायै नमः
३ कामेश्वरविमोहिन्यै नमः
३ कामेश्वरब्रह्मविद्यायै नमः
३ कामेश्वरगृहेश्वर्यै नमः
३ कामेश्वराह्लादकर्यै नमः
३ कामेश्वरमहेश्वर्यै नमः
३ कामेश्वर्यै नमः
३ कामकोटिनिलयायै नमः
३ काङ्क्षितार्थदायै नमः २६०
३ लकारिण्यै नमः
३ लब्धरूपायै नमः
३ लब्धधिये नमः
३ लब्धवाञ्छितायै नमः
३ लब्धपापमनोदूरायै नमः
३ लब्धाहङ्कारदुर्गमायै नमः
३ लब्धशक्त्यै नमः
३ लब्धदेहायै नमः
३ लब्धैश्वर्यसमुन्नत्यै नमः
३ लब्धवृद्ध्यै नमः २७०
३ लब्धलीलायै नमः
३ लब्धयौवनशालिन्यै नमः
३ लब्धातिशयसर्वाङ्गसौन्दर्यायै नमः
३ लब्धविभ्रमायै नमः
३ लब्धरागायै नमः
३ लब्धपत्यै नमः
३ लब्धनानागमस्थित्यै नमः
३ लब्धभोगायै नमः
३ लब्धसुखायै नमः
३ लब्धहर्षाभिपूरितायै नमः २८०
३ ह्रीङ्कारमूर्त्यै नमः
३ ह्रीङ्कारसौधशृङ्गकपोतिकायै नमः
३ ह्रीङ्कारदुग्धाब्धिसुधायै नमः
३ ह्रीङ्कारकमलेन्दिरायै नमः

३ ह्रीङ्कारमणिदीपार्चिषे नमः
३ ह्रीङ्कारतरुशारिकायै नमः
३ ह्रीङ्कारपेटकमणये नमः
३ ह्रीङ्कारदर्शबिम्बितायै नमः
३ ह्रीङ्कारकोशासिलतायै नमः
३ ह्रीङ्कारस्थाननर्तक्यै नमः २९०
३ ह्रीङ्कारशुक्तिकामुक्तामणये नमः
३ ह्रीङ्कारबोधितायै नमः
३ ह्रीङ्कारमयसौवर्णस्तम्भ-
विद्रुमपुत्रिकायै नमः
३ ह्रीङ्कारवेदोपनिषदे नमः
३ ह्रीङ्काराध्वरदक्षिणायै नमः
३ ह्रीङ्कारनन्दनारामनवकल्पकवल्लर्यै
नमः
३ ह्रीङ्कारहिमवद्गङ्गायै नमः
३ ह्रीङ्कारार्णवकौस्तुभायै नमः
३ ह्रीङ्कारमन्त्रसर्वस्वायै नमः
३ ह्रीङ्कारपरसौख्यदायै नमः ३००

पूनरपि पूर्ववत् न्यासध्यानादिकं कुर्यात्।

अस्य श्रीललितात्रिशतीस्तोत्रमालामन्त्रस्य हयग्रीवऋषये नमः (शिरसि) अनुष्टुप्छन्दसे नमः (मुखे), श्रीललिताम्बादेवतायै नमः (हृदये), ३ क०५ बीजाय नमः (गुह्ये), ३ स० ४ शक्तये नमः (पादयोः) ३ ह० ६ कीलकाय नमः (नाभौ) श्रीललिताम्बाप्रसादसिद्धये पूजने विनियोगाय नमः (सर्वाङ्गे)। कूटत्रयं द्विरावृत्त्या बालया वा षडङ्गद्वयम्।

**अथ ध्यानम्**

**अतिमधुरचापहस्तामपरिमितामोदबाणसौभाग्याम्।**
**अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे।। १।।**

(लमिति पञ्चोपचारैः सम्पूज्य-)

ऐं, ह्रीं, श्रीं, श्रीमद्राजराजेश्वर्यै नमः

*षोडशानन्दश्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे*
*श्रीललिताम्बात्रिशतनामावलिः सम्पूर्णा।*

# अथ महायागक्रमः

भद्रं कर्णेभिरिति शान्तिः

**भावनोपनिषत् प्रयोगविधिसमेता**

(आत्मानमखण्डमण्डलाकारमावृत्य सकलब्रह्माण्डमण्डलं स्वप्रकाशं ध्यायेत्)

१. श्रीगुरुस्सर्वकारणभूता शक्तिः।।

२. तेन नवरन्ध्ररूपो देहः।।

३. नवचक्ररूपं श्रीचक्रम्।।

४. वाराहीपितृरूपा कुरुकुल्ला बलिदेवता माता।।

५. पुरुषार्थास्सागराः।।

६. देहो नवरत्नद्वीपः।।

७. त्वगादिसप्तधातुरोमसंयुक्तः।।

८. सङ्कल्पाः कल्पतरवः तेजः कल्पकोद्यानम्।।

९. रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्ऋतवः।।

१०. ज्ञानमर्घ्यं ज्ञेयं हविः ज्ञाता होता ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम्।।

११. नियतिशृङ्गारादयो रसा अणिमादिसिद्धयः। कामक्रोधलोभमोहमदमात्सर्य-पुण्यपापमय्यो ब्राह्म्याद्यष्टशक्तयः।।

१२. आधारनवकं मुद्राशक्तयः।।

१३. पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानि मनोविकारः कामाकर्षिण्यादिषोडश शक्तयः।।

१४. वचनादानगमनविसर्गानन्दहानोपादानोपेक्षाख्यबुद्धयोऽनङ्गकुसुमाद्यष्टौ।।

१५. अलम्बुसा कुहूर्विश्वोदरा वारुणी हस्तिजिह्वा यशोवती पयस्विनी गान्धारी पूषा शङ्खिनी सरस्वती इडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दशशक्तयः।।

१६. प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जया दशवायवस्सर्व-सिद्धिप्रदादिबहिर्दशारदेवताः।।

१७. एतद्वायुसंसर्गकोपाधिभेदेन रेचकः पाचकश्शोषको दाहकः प्लावक इति प्राणमुख्यत्वेन पञ्चधा जठराग्निर्भवति।।

१८. क्षारक उद्गारकः क्षोभको जृम्भको मोहक इति नागप्राधान्येन पञ्चविधास्ते मनुष्याणां देहगाः भक्ष्यभोज्यचोष्यलेह्यपेयात्मकपञ्चविधमन्नं पाचयन्ति।।

१९. एता दश वह्निकलास्सर्वज्ञाद्या अन्तर्दशारगा देवताः।।

२०. शीतोष्णसुखदुःखेच्छास्सत्वरजस्तमोगुणाःवशिन्यादिशक्तयोऽष्टौ।।

२१. शब्दादितन्मात्राः पञ्चपुष्पबाणाः।।

२२. मन इक्षुधनुः।।

२३. रागः पाशः।।

२४. द्वेषोऽङ्कुशः।।

२५. अव्यक्तमहदहङ्काराः कामेश्वरीवज्रेश्वरीभगमालिन्योऽन्तस्त्रिकोणगा देवताः।।

२६. निरुपाधिकी संविदेव कामेश्वरः।।

२७. सदानन्दपूर्णा स्वात्मैव परदेवता ललिता।।

२८. लौहित्यमेतस्य सर्वस्य विमर्शः।।

२९. अनन्यचित्तत्वेन च सिद्धिः।।

३०. भावनायाः क्रिया उपचाराः।।

३१. अहं त्वमस्ति नास्ति कर्तव्यमकर्तव्यमुपासितव्यमित्यादि विकल्पानाम् आत्मनि विलापनं होमः।।

३२. भावनाविषयाणामभेदभावना तर्पणम्।।

३३. पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनम् पञ्चदश नित्याः।।

३४. एवं मुहुर्त्तत्रितयं मुहूर्त्तद्वितयं मुहूर्त्तमात्रं वा भावनापरो जीवन्मुक्तो भवति स एव शिवयोगीति गद्यते।।

३५. कादिमतेनान्तश्चक्रभावनाः प्रतिपादिताः।।

३६. य एवं वेद सोऽथर्वशिरोऽधीते।।

*इति भावनोपनिषत्।*

# प्रयोंगविधिः

**अथ भावनोपनिषदा मुक्त्यै या भावनाः कथिताः।**

**भास्कररायो रचयति तासामेवं प्रयोगविधिम्।।**

मूलेन प्राणानायम्य ऋष्यादिन्यासत्रयं कृत्वा।

विवेकवृत्त्यवच्छिन्नचिच्छक्तिरूपसुषुम्नात्मने श्रीगुरवे नमः।।

(इति ब्रह्मरन्ध्रं स्पृष्ट्वा)

